THE

# SIDDHÂNTA KAUMUDÎ

OF

SRI BHATTOJI DEEKSHITA

WITH THE COMMENTARY

# SRÎ BÂLAMANÔRAMÂ

OF

SRI VASUDEVA DEEKSHITA

## PÛRVÂRDHAM.

EDITED AND PUBLISHED

BY

S CHANDRASEKHARA SASTRIGAL,

TEPPAKULAM

Trichinopoly

PRINTED BY BR JOSEPH, S J , SUPDT ,

ST JOSEPH'S INDUSTRIAL SCHOOL PRESS

1910

॥ श्रीरस्तु ॥

# ॥ सिद्धान्तकौमुदी ॥

श्रीमद्भट्टोजिदीक्षितविरचिता

## ॥ पूर्वार्धम् ॥

श्रीमद्वासुदेवदीक्षितप्रणीतया

# श्रीबालमनोरमाख्यया

व्याख्यया समुल्लासिता ।


*M A J Tirumalai Iyengar, M A, L.T*

*Hindu High School, Triplicane, Madras*


त्रिशिर पुरवास्तव्येन

**आदनूर् शं. चन्द्रशेखरशास्त्रिणा**

सशोध्य प्रकाशिता ।

१९१०

## ॥ कौमुदीपूर्वार्धगतविषयानुक्रमणिका ॥

॥ श्रीगुरुचरणारविन्दाभ्यां नम ॥

# सिद्धान्तकौमुदीसहिता

# ॥ बालमनोरमा ॥

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नम. ॥ १ ॥
येन धौता गिर. पुसां विमलैश्शब्दवारिभि ।
तमश्चाज्ञानजं भिन्न तस्मै पाणिनये नम ॥ २ ॥
वाक्यकारं वररुचिं भाष्यकारं पतञ्जलिम् ।
पाणिनिं सूत्रकारञ्च प्रणतोऽस्मि मुनित्रयम् ॥ ३ ॥
मुनित्रयं नमस्कृत्य तदुक्ती परिभाव्य च ।
वैयाकरणसिद्धान्तकौमुदीयं विरच्यते ॥ ४ ॥

---

स जयति दिव्यनटेशो नृत्यति योऽसौ चिदम्बरसभायाम् ।
पाणिन्याद्या मुनयो यस्य च दयया मनोरथानभजन् ॥ १ ॥
अस्तु नम पाणिनये भूयो मुनये तथास्तु वररुचये ।
किञ्चास्तु पतञ्जलये शब्दब्रह्मात्मने च धूर्जटये ॥ २ ॥
व्याख्याता बहुभि. प्रौढैरेषा सिद्धान्तकौमुदी ।
वासुदेवस्तु तद्व्याख्यां वष्टि बालमनोरमाम् ॥ ३ ॥

ओ मङ्गळादीनि मङ्गळमध्यानि मङ्गळान्तानि च शास्त्राणि प्रथन्ते । वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि चाध्येतारश्च वृद्धियुक्ता यथा स्युरिति वृद्धिसूत्रस्थभाष्यादिस्मृतिसिद्धकर्तव्यताक ग्रन्थादौ कृत मङ्गळ शिष्यशिक्षायै ग्रन्थतो निबध्नन् प्राचीनग्रन्थैरगतार्थता विषयप्रयोजनसम्बन्धाधिकारिणश्च सूचयन् चिकीर्षित प्रातिजानीते । मुनित्रयमिति श्लोकेन । इय वैयाकरणसिद्धान्तकौमुदी विरच्यत इत्यन्वय । इयमिति ग्रन्थरूपा वाक्यावलिर्विवक्षिता ।

भाविन्या अपि तस्या बुद्ध्या विषयीकरणादियमिति प्रत्यक्षवन्निर्देश । व्याकरणमधीयते विदन्ति वा वैयाकरणा तेषा सिद्धान्ता एवमेते शब्दास्साधव इति निश्चितार्था तेषा कौमुदी चन्द्रिका अत्यन्तसादृश्यात्ताद्रूप्यव्यपदेश । चन्द्रिका हि तमो निरस्यति । भावान् सुख प्रकाशयति । दिनकरकिरणसम्पर्कजनितसन्तापमपगमयति । एवमियमपि ग्रन्थरूपवाक्याव-लिरज्ञानात्मक तमो निरस्यति । मुनित्रयग्रन्थभावाननायास प्रकाशयति । अतिविस्तृतदुरूह-भाष्यकैयटादिमहाग्रन्थपरिशीलनजनितचित्तसन्ताप च शमयतीति अत्यन्तसादृश्याद्युज्यते चन्द्रिकातादात्म्याध्यवसाय । विरच्यते क्रियते । वर्तमानसामीप्याद्वर्तमानव्यपदेश । किं कृत्वेत्यत आह । **मुनित्रयं नमस्कृत्येति** ॥ त्रयो अवयवा अस्य समुदायस्य त्रय । त्र्यवयवकसमुदाय । "सख्याया अवयवे तयप्" इति तयप् तद्धित । "द्वित्रिभ्या तयस्यायज्वा" इति तस्यायजादेश । मुनीना त्रयमिति षष्ठीसमास । त्रयाणा मुनीना समुदाय इति यावत् । यद्यपि मुनिशब्दस्य त्रिशब्दस्य चाभेदान्वये त्रि-शब्दस्य मुनिशब्दसापेक्षत्वात् असामर्थ्यात्तद्धितानुपपत्ति । तथापि त्रयोऽवयवा अस्य समुदायस्य त्रय इति प्रथम व्युत्पाद्यम् । अत्र त्रिशब्दस्य मुनिशब्दमनपेक्ष्यैव समुदायेऽन्वया-न्नास्त्यसामर्थ्यं । ततो मुनीना त्रयमिति मुनिशब्द समुदायेऽन्वेति । तस्य प्रत्ययार्थतया प्रधा-नत्वात् । न तु मुनिशब्दस्य त्रयशब्दैकदेशभूतत्रिशब्देनाभेदान्वय । पदार्थ पदार्थेनान्वेति न तु तदेकदेशेनेति न्यायात् । ततश्च मुनिशब्दत्रिशब्दयो परस्परवार्तानाभिज्ञयोरेव शब्दमर्यादया समुदायेऽन्वये सति पश्चात्सख्याया परिच्छेदकत्वस्वभावतया त्रित्वस्य परिच्छेद्यपर्यालोचनाया सन्निहितपदान्तरोपस्थितत्वान्मुनय एव परिच्छेद्यतया सबध्यन्ते । त्रयाणा मुनीना समुदाय इति । सोऽय पार्ष्ठिकान्वय अरुणाधिकरणन्यायविदा सुगम इत्यल विस्तरेण । मुनित्रय.मिति कर्मणि द्वितीया । नमस्स्वस्तीति चतुर्थी तु न । कारकविभक्तेर्बलीयस्त्वस्य वक्ष्यमाणत्वात् । नमस्कृत्य अञ्जलिशिरस्सयोगादिव्यापारेण तोषयित्वेत्यर्थ । नमस्करोतेरञ्जलिशिरस्सयोगादिरूपव्यापारमा-त्रार्थकत्वे अकर्मकत्वापत्या द्वितीयानुपपत्ते । ननु प्राचीनेषु प्रक्रियाकौमुद्यादिग्रन्थेषु वैयाकरण-सिद्धान्ताना सग्रहात्तैरेव ग्रन्थै चरितार्थत्वात्किमनेन ग्रन्थेनेत्यत आह । **तदुक्तीः परिभाव्य-चेति** ॥ तस्य मुनित्रयस्य उक्तय तदुक्तय सूत्रवार्तिकभाष्यात्मकग्रन्थरूपवाक्यावलय ता परिभाव्य च सम्यगालोच्य चेत्यर्थ । भूधातोस्स्वार्थिकणिजन्ताद्रूपम् । चुरादौ हि भुवोऽवकल्कने इत्यत्र ण्यन्तभूधातोश्चिन्तनार्थकत्वमपि वक्ष्यते मूलकृतैव । नच 'अनादर परिभव परीभावस्तिर-स्क्रिये'ति कोशविरोधश्शङ्क्य । कोशस्य अण्यन्तभूधातुविषयत्वात् । परौ भुवोऽवज्ञान इति सूत्रे-ण तिरस्कारार्थे वर्तमानादण्यन्तात्परिपूर्वकभूधातोर्भावे घञि परिभावशब्दस्य व्युत्पत्यवगमात् । एवञ्च तदुक्तीरिति तच्छब्दस्य बुद्धिस्थपरामर्शित्वात्प्राचा प्रक्रियाकौमुदीप्रसादादिकृता उक्ती-स्तिरस्कृत्येत्यर्थ इति व्याख्यान क्लिष्टत्वादुपेक्षितम् । अनेन स्वग्रन्थस्य मुनित्रयग्रन्थानुयायित्व प्राचीनप्रक्रियाकौमुद्यादिग्रन्थाना तद्विरुद्धत्वञ्च सूचितम् । तच्च प्रौढमनोरमाया स्वयमेव मूलकृता प्रपञ्चितमेव । वैयाकरणसिद्धान्तकौमुदीत्यन्वर्थसज्ञया वैयाकरणसिद्धान्ता प्रतिपाद्यत्वेन विषया । अनायासेन तदवगम प्रयोजनम् । तस्य ग्रन्थस्य च जन्यजनकभावस्सम्बन्ध । वैयाकरणसिद्धा-न्तजिज्ञासुरधिकारीति सूचितम् । अथ वैयाकरणसिद्धान्तान्निरूपयिष्यन् व्याकरणशास्त्रस्य मूलभू-

## अथ संज्ञाप्रकरणम्।

अइउण्। ऋऌक्। एओङ्। ऐऔच्। हयवरट्। लण्। ञमङणनम्। झभञ्। घढधष्। जबगडदश्। खफछठथचटतव्। कपय्। शषसर्। हल्।

इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि। एषामन्त्या इतः। लण्सूत्रे अकारश्च। हकारादिष्वकार उच्चारणार्थः।

---

तानि चतुर्दशसूत्राणि पठति। **अइउणित्यादिना**॥ नन्विमानि सूत्राणि मुनित्रयग्रन्थबहिर्भूतत्वादप्रमाणमित्यत आह। **इति माहेश्वराणि सूत्राणीति**॥ महेश्वरादागतानि माहेश्वराणि। तत आगत इत्यण्। महेश्वरादधिगतानीति यावत्। तदुक्तं पाणिनिशिष्यप्रणीतशिक्षायाम्। येनाक्षरसमाम्नायमधिगम्य महेश्वरात्। कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः। इति। एतत् चतुर्दशसूत्रव्याख्यायां नन्दिकेश्वरकृतायां काशिकायामप्युक्तम्। नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्। उद्धर्तुकामस्सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्॥ इति। अत्र ननादेत्यन्तर्भावितण्यर्थो नदधातुः। ढक्कां नादयामासेत्यर्थः। नवपञ्चवारं चतुर्दशकृत्वः। एतच्छिवढक्कोत्थितं वर्णजालं शिवसूत्रजालतया विमर्शे जानामीत्यर्थः। आर्षस्तड्। एवञ्च महेश्वरेण प्रोक्तानि माहेश्वराणीति निरस्तम्। एतेन माहेश्वरत्वादेतेषां सूत्राणां नाप्रामाण्यमित्युक्तं भवति। नन्वेवमपि अनर्थकवर्णराश्यात्मकानामेषां सूत्राणां वैयाकरणसिद्धान्तप्रकाशने उपयोगाभावादिह तदुपन्यासो व्यर्थ इत्यत आह। **अणादिसंज्ञार्थानीति**॥ अण् आदिः यासां ता अणादयः अणादयश्च तास्संज्ञाश्च अणादिसंज्ञाः ता अर्थः प्रयोजनं येषां तानि अणादिसंज्ञार्थानि। अनर्थकवर्णराशित्वेऽपि एषां सूत्राणां व्याकरणशास्त्रगतव्यवहारोपयोग्यणादिसंज्ञासु उपयोगान्नानर्थक्यमिति भावः। कथमेषां सूत्राणामणादिसंज्ञार्थत्वमित्यत आह। **एषामन्त्या इत इति**॥ एषामुदाहृतसूत्राणाम् अन्त्या अन्तेभवा णकारादिवर्णा इत्संज्ञकाः प्रत्येतव्या इत्यर्थः। **लण्सूत्रे अकारश्चेति**॥ इत इत्यनुषज्यते। तच्च एकवचनान्ततया विपरिणम्यते। लण्सूत्रे लकारात्परः अकारश्च इत्संज्ञकः प्रत्येतव्य इत्यर्थः। अनन्त्यत्वात्पृथक्प्रतिज्ञा। ननु लण्सूत्र एव अकारस्य इत्संज्ञकत्वे हयवरेत्यादौ पुनःपुनरकारोच्चारणस्य किं प्रयोजनमित्यत आह। **हकारादिष्वकार उच्चारणार्थ इति**॥ हकारादीनां सुखोच्चारणार्थं पुनःपुनरकारपाठ इत्यर्थः। अन्यथा ह्य्व्र् इत्येव क्लिष्टोच्चारणापत्तेरिति भावः। अथवा अचं विना हलामुच्चारणाभावात् पुनःपुनरकारपाठो हकाराद्युच्चारणार्थ इत्येव व्याख्येयम्। अत एव उच्चैरुदात्त इति सूत्रे भाष्यम्। नान्तरेणाच्चं व्यञ्जनस्योच्चारणं भवतीति। अत्र च इदमेव अकारस्य पुनःपुनरुच्चारणं ज्ञापकम्। एवञ्च वर्णात् कार इति कारप्रत्यये सति ककार इत्यादि। वाक् इत्याद्यवसानेषु, वृक्ष इत्यादौ संयुक्तवर्णेषु च, पदान्ते चो कुरित्यादिविधिबलात्, हलोऽनन्तरास्सं-

## १ । हलन्त्यम् । (१-३-३)

'हल्' (प्र सू १४) इति सूत्रेऽन्त्यमित्स्यात् ।

## २ । आदिरन्त्येन सहेता । (१-१-७१)

अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् । इति

---

योग इत्यादिशास्त्रबलाच्च, नाय नियम इत्यलम् । ननु चतुर्दशसूत्रया णकाराद्यन्तवर्णाना इत्सज्ञा प्रतिज्ञाता । एषामन्त्या इत इति । तदनुपपन्नम् । तेषा हि "हलन्त्यमिति" सूत्रेण इत्सज्ञा वक्तव्या । तच्च सूत्र हल्पदार्थावगमोत्तरमेव प्रवृत्तिमर्हति । हल्सज्ञाच हलिति सूत्रे लकारस्य इत्सज्ञाया सत्या आदिरन्त्येन सहेतेति सूत्रेण वाच्या । हलिति सूत्रे लकारस्य इत्सज्ञा च हलन्त्यमिति सूत्रेणैव वाच्या । एवञ्च हलिति सूत्रे लकारस्य इत्सज्ञाया सत्या आदिरन्त्येनेति हल्सज्ञासिद्धौ हलन्त्यमिति सूत्रप्रवृत्ति । हलन्त्यमिति सूत्रेण हल्सूत्रे लकारस्य इत्सज्ञाया आदिरन्त्येन सहेतेति हल्सज्ञासिद्धिरित्येव हलन्त्यमादिरन्त्येनेत्यनयो परस्परसापेक्षत्वेन अन्योन्याश्रयत्वादबोध । एवञ्च हल्सज्ञामनुपजीव्यैव हल्सूत्रे लकारस्य केनचित् सूत्रेण इत्सज्ञा अबोधयित्वा हलन्त्यमिति हलामित्सज्ञाबोधन पाणिनेरयुक्तमित्याशक्य हल्सज्ञामनुपजीव्यैव हल्सूत्रे लकारस्य इत्सज्ञा विधातु हलन्त्यमिति सूत्र द्विरावृत्य प्रथमसूत्रमुपाक्षिपति । **हलन्त्यम्** ॥ एकपद सूत्र । हलि अन्त्य हलन्त्यमिति विग्रह । शौण्डादेराकृतिगणत्वात् सप्तमी शौण्डैरिति सप्तमीसमास । सुप्सुपेति समासो वा । हल्पदमिह सूत्रपर । उपदेशेऽजनुनासिक इदिति पूर्वसूत्रात् इदित्यनुवर्तते । तदाह । **हलिति सूत्र इत्यादिना । इत्स्यादिति** ॥ इत्सज्ञक स्यादित्यर्थ । सज्ञाप्रस्तावात् । एवञ्च अनेन सूत्रेण हल्सूत्रे लकारस्य हल्सज्ञामनुपजीव्यैव इत्सज्ञासिद्धेति नान्योन्याश्रय इति भाव । नन्वस्तु हल्सूत्रे लकारस्य इत्सज्ञा । तत किमित्यत आह । **आदिरन्त्येन सहेता** ॥ अन्तेभव अन्त्य । तेन इता सहोच्चार्यमाण आदि अण् अच् इत्यादिरूप सज्ञेत्यर्थ । सज्ञाप्रस्तावात् । तत्र यस्मात्पूर्व नास्ति परमस्ति स आदि । यस्मात्पर नास्ति पूर्वमस्ति सोऽन्त इति आद्यन्तवत्सूत्रे भाष्यम् । तादिहाद्यन्तशब्दाभ्या मध्यगा आक्षिप्यन्ते । अतस्तेषा सज्ञेति लभ्यते । स्व रूपमिति पूर्वसूत्रात्स्वमित्यनुवर्तते । तच्च षष्ठ्यन्ततया विपरिणम्यते । तदेतदाह । **अन्त्येनेतेत्यादि । स्वस्य चेति** ॥ अत्र च स्वशब्देन सज्ञाकोटिप्रविष्ट आदिरेव परामृश्यते । नत्वन्त्योऽपि । अन्त्येनेति तृतीयया "सह युक्तेऽप्रधान" इति विहितया तस्य अप्राधान्यावगमात् । सर्वनाम्ना चोत्सर्गत प्रधानपरामर्शित्वात् । न च इक् उक् इच् यय् मय् इत्यादिप्रत्याहारा कथ स्यु । इकारादीनामादित्वाभावादिति वाच्यम् । न हि सूत्रापेक्षमिहादित्वम् । किन्तु आद्यन्तशब्दाक्षिप्तसमुदायापेक्षम् । ततश्च अइउणिति इकारमारभ्य ऋऌक् इति ककारपर्यन्त वर्णसमुदाय बुद्ध्या परिकल्प्य तदादित्व इकारस्य सम्भावनीयम् । एवमिजादिष्वपि । तथा अन्त्यत्वमपि बुद्धिकल्पितसमुदायापेक्षमेव । न तु सूत्रापेक्षम् । ततश्च रप्रत्याहारस्सुग्रह । अन्यथा लण्सूत्रे अकारस्यान्त्यत्वाभावात् स न स्यात् । अत्र आद्यन्तशब्दयोरन्यतराभावे मध्यगानामिति न लभ्येत । आदिरित्यभावे हि अन्त्येनेता सहोच्चार्यमाणो वर्ण अन्त्यात्प्राक्

हल्संज्ञायाम्। 'हलन्त्यम्' (सू १) । उपदेशेऽन्त्यं हलित्स्यात्। उपदेश आद्योच्चारणम्। ततः 'अण्' 'अच्' इत्यादिसंज्ञासिद्धौ।

## ३। उपदेशेऽजनुनासिक इत्। (१-३-२)

---

भाविना वर्णाना सञ्ज्ञेत्येव लभ्येत। ततश्च हल्प्रत्याहारे अकारादीनामपि ग्रहण स्यात्। अन्त्यलकारात्पूर्वभावित्वाविशेषात्। अन्त्येनेत्यभावे तु आदिरिता सहोच्चार्यमाण आदे ऊर्द्ध्वभाविना वर्णाना सञ्ज्ञेत्येव लभ्येत। ततश्च अच्प्रत्याहारे हकारादीनामपि ग्रहणापत्ति। आदेरकारादूर्द्ध्वभावित्वाविशेषात्। उभयोपादाने तु मध्यगानामिति लभ्येत इत्यदोष। परस्मिन् सति यस्मात्पूर्वो नास्ति स आदि। पूर्वस्मिन् सति यस्मात्परो नास्ति सोऽन्त्य इति भाष्ये आद्यन्तशब्दार्थनिर्वचनेन आद्यन्तयोर्मध्यगाविनाभूतत्वेन ताभ्या मध्यगानामाक्षेपात्। यद्यपि द्वयोरप्याद्यन्तशब्दौ सम्भवत। उक्तनिर्वचनाविरोधात्। तथापि नेह द्वयोराद्यन्तशब्दौ भवत। तथा सति हि अन्त्येनेता सह उच्चार्यमाण आदि स्वस्य आदे सञ्ज्ञेत्येव लभ्येत। उक्तरीत्या स्वशब्देन अन्त्यस्य परामर्शासम्भवात्। ततश्च उण् इत्युकारस्य सञ्ज्ञेति पर्यवस्येत्। तत्र एकस्य वर्णस्य वर्णद्वयात्मकसञ्ज्ञाविधान व्यर्थमापद्येत। गौरवात्। प्रत्याहाराणा व्यवहारलाघवार्थत्वात्। अतो मध्यमसत्व एवात्र, आद्यन्तशब्दाविति, ताभ्या मध्यगानामिति, लभ्यते। इतेति। किं अम् प्रत्याहार जमडणेति मकारेण माभूत्। नन्वेवमपि सुट् प्रत्याहार टा इति टकारेण किं न स्यात्। टान्तसमुदायापेक्षया तस्य अन्त्यत्वादिति वाच्यम्। प्रथमातिक्रमणे कारणाभावेन सुट्प्रत्याहारस्य औटष्टकारेणैव ग्राह्यत्वात्। उक्त च जैमिनिना। प्रथम वा नियम्येत कारणस्यानतिक्रमात्। इति। विस्तरभयाद्विरम्यते। **इति हल्संज्ञायामिति**॥ हल्सूत्रे लकारस्य हलन्त्यमित्यावृत्तप्रथमसूत्रेण इत्सञ्ज्ञाया सत्यामादिरन्त्येनेति हल्सञ्ज्ञासिद्धौ चतुर्दशसूत्रयामन्त्यणकारादिवर्णाना हल्त्व सिद्धमित्यर्थ। तत किमित्यत आह। **हलन्त्यम्**॥ आवृत्तयोर्द्वितीय सूत्रमेतत्। हल् अन्त्यमिति च्छेद। हल्शब्दो नपुसकलिङ्गोऽप्यस्ति। अन्त्यमिति नपुसकसामानाधिकरण्यात्। उपदेशेऽजनुनासिक इदिति पूर्वसूत्रादुपदेश इति इदिति चानुवर्तते। तदाह। **उपदेशेऽन्त्यमित्यादिना**॥ धातुप्रातिपदिकनिपातप्रत्याहारसूत्रप्रत्ययादेशागमानामन्त्यमिति भाष्यम्। अथ कोऽयमुपदेशो नाम। तदाह। **उपदेश आद्योच्चारणमिति**॥ उपशब्द आद्यर्थक। दिशिरुच्चारणक्रियायाम्। भावे घञिति भाव। एतच्च आदेऽच उपदेशे इत्यादि सूत्रे भाष्ये स्पष्टम्। धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्। आगमप्रत्ययादेशा उपदेशा प्रकीर्तिता। इति। प्राचीनकारिका तु प्रौढमनोरमाया बहुधा दूषिता। उपदेशे किम्। इदमस्थमुरिति थमुप्रत्यये उकारस्योच्चारणार्थस्य निवृत्तौ मकारस्य प्रत्ययान्तत्वेऽपि इत्सञ्ज्ञा माभूत्। तदेव हलन्त्यमित्यावृत्तद्वितीयसूत्रेण चतुर्दशसूत्रयामन्त्यणकारादिवर्णाना इत्सञ्ज्ञा सिद्धेति स्थितम्। तत किमित्यत आह। **ततः अण् अच् इत्यादिसंज्ञासिद्धाविति**॥ तत णकारादीनामित्सञ्ज्ञासिद्ध्यनन्तर आदिरन्त्येनेत्यणादिसञ्ज्ञा सिद्धेत्यर्थ। लण्सूत्रे अकारश्चेति प्रतिज्ञात। तस्य अकारस्य अनन्त्यत्वादहल्त्वाच्च हलन्त्यमिति इत्सञ्ज्ञायामप्राप्ताया तत्प्रापक सूत्रमाह। **उपदेशे**॥ सञ्ज्ञाप्रस्तावात्सञ्ज्ञेति

उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् । प्रतिज्ञानुनासिक्याः पाणिनीयाः । 'लण्' (प्र सू ६) सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा । प्रत्याहारेष्वितां न ग्रहणम् । 'अनुनासिक.' इत्यादिनिर्देशात् । न ह्यत्र ककारे परेऽच्कार्यं दृश्यते । 'आदिरन्त्येन–' (सू २) इत्येतत्सूत्रेण कृता संज्ञा प्रत्याहारशब्देन व्यवह्रियन्ते ।

---

लभ्यते । तदाह । **उपदेशे अनुनासिक इत्यादिना** ॥ सूत्रे अजिति कुत्वाभाव आर्ष । अजित्सज्ञ स्यादिति विवरणे कुत्वाभाव असन्देहार्थ । ननु मुखेन नासिकयाचोच्चार्यमाणो वर्ण अनुनासिक इत्यनुपदमेव वक्ष्यते । शास्त्रकृता च एते कतिपयवर्णास्तथोच्चारिता । इतरे तु केवलमुखेन उच्चारिता इति कथमिदानीन्तनैरवगन्तव्यमित्यत आह । **प्रतिज्ञानुनासिक्याः पाणिनीया इति** ॥ प्रतिज्ञायते अभ्युपगम्यत इति प्रतिज्ञा । नित्यस्त्रीलिङ्गोऽयम् । स्त्रियामित्यधिकारे आतश्चोपसर्ग इति कर्मण्यङ् । अनुनासिकस्य भाव आनुनासिक्य । प्रतिज्ञा आनुनासिक्य येषा ते प्रतिज्ञानुनासिक्या पाणिनिशिष्या इत्यर्थ । शिष्यपरम्परया शास्त्रकृता तथाविधमुच्चारण इदानीन्तनाना सुगममिति यावत् । तदेव लण्सूत्रे अकारस्य अनुनासिकत्वादित्सञ्ज्ञा सिद्धा । तत किमित्यत आह । **लण् सूत्रस्थेति** ॥ लण्सूत्रे तिष्ठतीति लणसूत्रस्थ सचासाववर्णश्च लण्सूत्रस्थावर्ण तेन सहोच्चार्यमाणो रेफ र इत्येव रूप रेफलकारयोस्सञ्ज्ञेत्यर्थ । वस्तुतस्तु रप्रत्याहार एव नास्तीति शब्देन्दुशेखरे व्यक्तम् । ननु आदिरन्त्येनेति सूत्रे मध्यगानामादेश्च सञ्ज्ञेति स्थितम् । एवञ्च अजादिप्रत्याहारेषु सञ्ज्ञाकोटिप्रविष्टानामन्त्यानामिता ग्रहणाभावेऽपि णकारादीनामपि मध्यगत्वाविशेषात् ग्रहण स्यात् । ततश्च रलयोस्सञ्ज्ञेति पूर्वग्रन्थे रलयोरिति न्यून टकारस्यापि मध्यगत्वेन ग्राह्यत्वादित्यत आह । **प्रत्याहारेष्वितान्न ग्रहणमिति** ॥ प्रत्याहारेषु अजादिसञ्ज्ञासु मध्यवर्तिनामपि इतान्न ग्रहणमित्यर्थ । कुत इत्यत आह । **अनुनासिक इत्यादिनिर्देशात् इति** ॥ आदिना तृषि मृषि कृषे काश्यपस्येत्यादि सङ्ग्रह । कथमय निर्देश उक्तार्थे हेतुरित्यत आह । **नहीति** ॥ अत्र अनुनासिकशब्दे ककारे परे इकारस्य अच्प्रयुक्त कार्यं इको यणचीति यणादेश न दृश्यते हीति योजना । यदिहि अजादिप्रत्याहारेषु इतामपि ग्रहण स्यात् तर्हि अच् प्रत्याहारे ऌलृक् इति ककारस्यापि प्रविष्टत्वेन अच्त्वात्तस्मिन् परे इकारस्य इको यणचि इति यणादेशे लोपो व्योर्वलीति लोपे अनुनास्क इति स्यात् । इकारो न श्रूयेत । श्रूयते च । अत प्रत्याहारेष्वितान्न ग्रहणमिति विज्ञायत इति भाव । यत्तु ऌलृक् इति ककारस्य अच्प्रत्याहारप्रविष्टत्वेऽपि प्रत्ययस्थादित्यादिना इत्वविधिसामर्थ्यादेव यण्लोपश्च न भवति । अन्यथा लाघवाल्लोपमेव विदध्यात् । अत प्रत्याहारेष्वितान्न ग्रहणमित्यत्र अनुनासिक इत्यादि निर्देशो न लिङ्गमित्याहु । तन्न । प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुप इतीत्वविधौ वर्णाधिक्यप्रसङ्गात् । प्रत्याहारशब्दस्याप्रसिद्धार्थत्वादाह । **आदिरन्त्येनेत्यादिना** ॥ प्रत्याह्रियन्ते सक्षिप्यन्ते वर्णा इति व्युत्पत्तेरिति भाव । नच अणुदित्सूत्रसिद्धासु अ इ उ इत्यादिसञ्ज्ञास्वतिप्रसङ्ग शक्य । योगरूढ्याश्रयणात् वैयाकरणप्रसिद्धिवशाच्च तथा रूढिरिति भाव ।

## ४ । ऊकालोऽज्ह्रस्वदीर्घप्लुतः । (१-२-२७)

उश्च ऊश्च ऊ३श्च व । वा काल इव कालो यस्य सोऽच्क्रमाद्ध्रस्वदीर्घप्लुतसंज्ञ स्यात् । स प्रत्येकमुदात्तादिभेदेन त्रिधा ।

## ५ । उच्चैरुदात्तः । (१-२-२९)

**ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञ. स्यात् । आ ये ।**

---

तत्र वर्णसमाम्नायसूत्रेषु पूर्वेण णकारेण एक प्रत्याहार । अण् । ककारेण त्रय । अक् इक् उक् । ङकारेण एक । एङ् । चकारेण चत्वार । अच् इच् एच् ऐच् । टकारेण एक । अट् । परेण णकारेण त्रय । अण् इण् यण् । मकारेण चत्वार । अम् यम् ञम् ङम् । ञकारेण एक । यञ् । षकारेण द्वौ । झष् भष् । शकारेण षट् । अश् हश् वश् झश् जश् बश् । वकारेण एक । छव् । यकारेण पञ्च । यय् मय् झय् खय् चय् । रेफेण पच । यर् झर् खर् चर् शर् । लकारेण षट् । अल् हल् वल् रल् झल् शल् । अकारेण एको रप्रत्याहार । इति वर्णसमाम्नायिका प्रत्याहाराश्चतुश्चत्वारिंशत् । एतेषामेव शास्त्रे उपयोगात् । इङ् इत्यादिप्रत्याहारास्तु प्रयोजनाभावान्न भवन्ति । शास्त्रे तद्व्यवहाराभावात् । अत्रास्मदीया सङ्ग्रहकारिका । स्यादेको ङ्ञणवटै षेण द्वौ त्रय इह कणाभ्याम् । चत्वारश्च चमाभ्या पञ्च यराभ्या शलाभ्या षट् ॥ तदेवमणादिसञ्ज्ञासु सिद्धासु अचो ह्रस्वादिसञ्ज्ञा विवक्ते । **ऊकालो** ॥ ह्रस्वदीर्घप्लुत इति समाहारद्वन्द्व । सौत्र पुंस्त्वम् । इतरेतरयोगद्वन्द्वो वा । तथा सत्येकवचनमार्ष । उ ऊ ऊ३ इति त्रयाणा एकमात्रद्विमात्रत्रिमात्राणा द्वन्द्वसमासे सति सवर्णदीर्घेण ऊ इति प्रश्लिष्टनिर्देश । तेषा काल ऊकाल । कालशब्दो मात्रापर्याय कालसदृशे लाक्षणिक । ऊकाल कालो यस्येति विग्रह. । "सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यो वाचोत्तरपदलोप इति" द्विपदो बहुव्रीहि । ऊकालशब्दे पूर्वपदे उत्तरखण्डस्य कालशब्दस्य लोप इत्यभिप्रेत्य फलितमाह । **वां काल इवेत्यादिना** ॥ व इति ऊशब्दस्य प्रथमाबहुवचन । वामिति षष्ठीबहुवचन । वा काल इव कालो यस्येति फलितार्थकथनम् । उक्तरीत्या द्विपद एव बहुव्रीहि । **क्रमादिति** ॥ यथासख्यसूत्रलभ्यमेतत् । इहैव तत्सूत्रमुपन्यासितुमुचितम् । नच उ ऊ ऊ३ इत्युवर्णाना कथ ह्रस्वदीर्घप्लुतसञ्ज्ञा । तेषा ऊकालसदृशकालत्वाभावात् । सादृश्यस्य भेदनिबन्धनत्वादिति वाच्यम् । ऊशब्दस्यात्र एकमात्रद्विमात्रत्रिमात्रकुक्कुटरुतानुकरणत्वात् । **स इति** ॥ स ह्रस्वो दीर्घ प्लुतश्च अच् प्रत्येकमुदात्तादिभेदेन उदात्तत्वेनानुदात्तत्वेन स्वरितत्वेन च धर्मविशेषेण त्रिधा त्रिभि प्रकारैर्वर्तत इत्यर्थ । उदात्तसञ्ज्ञामाह । **उच्चैरुदात्तः** ॥ नादधर्मविशेष उच्चैस्त्व नेह विवक्षितम् । उपांशूच्चार्यमाणे अव्याप्ते । किंतु उच्चैरशब्द अधिकरणशक्तिप्रधान ऊर्ध्वभागे इत्यर्थे वर्तते । ऊर्ध्वावयवस्य चावयवव्यपेक्षाया तालुकण्ठादिवर्णाभिव्यक्तिस्थानानामित्यर्थो लभ्यते । ऊकालोऽजिति सूत्रादजित्यनुवर्तते । तदेतदाह । **ताल्वादिष्वित्यादिना । सभागेष्विति** ॥ ताल्वादीना सावयवत्वकथन **ऊर्ध्वभागे इत्यस्योपपादनार्थम्** । तेषां अखण्डत्वे ऊर्ध्वभागे इत्यनुपपत्ते । उदात्तमुदाहरति । **आ**

## ६ । नीचैरनुदात्तः । (१-२-३०)

स्पष्टम् । अर्वाङ् ।

## ७ । समाहारः स्वरितः । (१-२-३१)

उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन्सोऽच्स्वरितसंज्ञ. स्यात् ।

## ८ । तस्यादित उदात्तमर्द्धह्रस्वम् । (१-२-३२)

**ह्रस्वग्रहणमतन्त्रम्** । स्वरितस्यादितोऽर्धमुदात्तं बोद्धव्यम् । उत्तरार्द्धं तु परिशेषादनुदात्तम् । तस्य चोदात्तस्वरितपरत्वे श्रवणं स्पष्टम् । अन्यत्र तूदात्त-

---

**ये इति** । आये मित्रा वरुणेत्यृचि आकार एकारश्च उदात्त इत्यर्थ । अनुदात्तसज्ञामाह । **नीचैरनुदात्तः । स्पष्टमिति** ॥ उक्तरीत्या ताल्वादिषु अधोभागे निष्पन्नोऽच् अनुदात्तसज्ञ स्यादिति स्पष्टार्थकमित्यर्थ । **अर्वाङ् इति** ॥ अर्वाङ् यज्ञस्सक्रामत्यृचि आद्य अकार अनुदात्त इत्यर्थ । अथ स्वरितसज्ञामाह । **समाहार स्वरितः** ॥ पूर्वसूत्राभ्या उदात्त इति अनुदात्त इति चानुवर्तते । ऊकालोऽजित्यस्मादजित्यनुवर्तते । ततश्च उदात्त अनुदात्तश्च अच् समाह्रियमाण स्वरित इत्यर्थ प्रतीयते । एव सति वर्णद्वयस्य स्वरितसज्ञा स्यात् । नत्वेकस्य अतो नैवमर्थ । किंतु उदात्तानुदात्तपदे अनुवृत्ते धर्मप्रधाने षष्ठ्यन्ततया च विपरिणम्येते । यत्र समाहरण स समाहार । अधिकरणे घञ् । ततश्च उदात्तत्वानुदात्तत्वयोर्धर्मयोर्यस्मिन्नाचि मेलन सोऽच् स्वरितसज्ञक इत्यर्थ । फलितमाह । **उदात्तत्वानुदात्तत्व इत्यादिना** ॥ ननु उदात्तत्वानुदात्तत्वयोरेकास्मिन्नपि मेलने कस्मिन्भागे उदात्तत्वस्य समावेश कस्मिन्भागे अनुदात्तत्वस्य समावेश इत्यत आह । **तस्यादितः** ॥ तस्य स्वरितस्य आदित पूर्वभागे अर्द्धह्रस्वमुदात्त इत्यर्थ प्रतीयते । एव सति दीर्घस्वरिते इय व्यवस्था न स्यात् । अत आह । **ह्रस्वग्रहणमतन्त्रमिति** ॥ तन्त्र प्रधान । (तन्त्र प्रधाने सिद्धान्ते) इति कोश । न विद्यते तन्त्र वाच्यार्थलक्षण प्रधान यस्य तत् अतन्त्र अविवक्षितार्थकमित्यर्थ । ह्रस्वग्रहण न कर्तव्यमिति यावत् । दीर्घस्वरितेऽप्युत्तरभागस्य वेदे अनुदात्तत्वदर्शनादिति भाव । ततश्च फलितमाह । **स्वरितस्यादावर्द्धमुदात्तं बोद्धव्यमिति** ॥ ननु अनुदात्तत्वस्य निवेशव्यवस्था कुतो नोक्तेत्यत आह । **उत्तरार्द्धन्त्विति** ॥ ननु एव सति अग्निमीळ इत्यत्र ईकारे स्वरिते कथमुत्तरार्धमनुदात्तम् । नेत्यत आह । **तस्य चेति** ॥ चकारो वाक्यालङ्कारे । तस्य अनुदात्तभागस्य उदात्तस्वरितपरत्वे उदात्तस्वरितौ परौ यस्मात् स उदात्तस्वरितपर तस्य भाव उदात्तस्वरितपरत्वम् । उदात्तपरकत्वे स्वरितपरकत्वे वा सति श्रवण स्पष्ट भवतीत्यर्थ । **अन्यत्रेति** ॥ उदात्तस्वरितपरकत्वाभावे अनुदात्तप्रचयपरकत्वे अनुदात्तभागस्य उदात्ततरत्वापरपर्याया उदात्तश्रुति ऋग्वेदप्रातिशाख्ये विहितेत्यर्थ । तत्र त्वेवमुक्तम् । अनुदात्त परश्शेष स उदात्तश्रुतिर्नचेत् । उदात्त वोच्यते किंचित्स्वरित वाक्षर परम् ॥ इति स्वरिते पूर्वभागस्य उदात्तत्वे सति परश्शेष

श्रुति प्रातिशाख्ये प्रसिद्धा। 'क १ वोऽश्वा,' 'रथानां' न ये २ ऽरा, शत-
चक्रं यो ३ ऽह्य' इत्यादिष्वनुदात्तश्रुति। 'अग्निमीळे' इत्यादावुदात्तश्रुति।
स नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा।

## ९। मुखनासिकावचनोऽनुनासिकः। (१-१-८)

मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञ. स्यात्। तदित्थम्।
अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदा.। लृवर्णस्य द्वादश। तस्य दी-

---

उत्तरभाग अनुदात्त प्रत्येतव्य। स. परश्शेष उदात्तश्रुति क्वचिद्भवति। किं सर्वत्रैव नेत्याह। न चेदित्यादिना। उदात्त स्वरित वा किञ्चिदक्षर पर नोच्यते चेदिति योजना। तत्र अनुदात्त-भागस्य स्पष्ट श्रवणमुदाहृत्य दर्शयति। **केत्यादिना। इत्यादिष्वनुदात्त इत्यन्तेन**॥ तत्र क इति ह्रस्वस्वरित। स तावत् वो इत्योकारात्मकोदात्तपरक। येऽरा इत्येकारो दीर्घस्वरित। सचऽरा इत्याकारात्मकोदात्तपर। शतचक्र यो इत्योकार कम्पस्वरित। स तु ह्य इत्यकारात्मक-स्वरितपरक। इत्येवमादिप्रदेशेषु अनुदात्तभाग स्पष्ट श्रूयत इत्यर्थ। अन्यत्र तूदात्तश्रुतिरित्ये-तदुदाहृत्य दर्शयति। **अग्निमीळे इत्यादावुदात्तश्रुति रिति**॥ पदकाले अग्निमित्यन्तोदात्तम्। ईळ इति अनुदात्तम्। तत्र 'उदात्तादनुदात्तस्य स्वरित' इति संहिताया ईकार स्वरित। 'स्वरितात्सं-हितायामनुदात्तानाम्' इत्येकार प्रचय। ततश्च ईकार स्वरित उदात्तस्वरितपरको न भवती-ति तदुत्तरभागस्य उदाहृतप्रातिशाख्यवचनेन उदात्ततरत्वात्मिका उदात्तश्रुतिरेव भवतीत्यर्थ। तदेवमुदात्तह्रस्व अनुदात्तह्रस्व स्वरितह्रस्व इति ह्रस्वस्त्रिविध। एव दीर्घोऽपि त्रिविध। तथा प्लुतोऽपि। ततश्च एकैक अच् नवविध इति स्थित। **सनवविधोऽपीति**। उक्तरीत्या नवविधोऽपि स अच् अनुनासिकत्वेन अननुनासिकत्वेन च द्विधा द्वाभ्या प्रकाराभ्या वर्तत इत्यर्थ। तदेवमनुनासिका नव अच, अननुनासिकाश्च नवेत्यष्टादशविधत्वमेकैकस्याच इति स्थितम्। अथानुनासिकसज्ञामाह। **मुखनासिका**॥ मुखसहिता नासिका मुखनासिका शाकपार्थिवादि-त्वात् सहितपदस्य लोप। उच्यते उच्चार्यते इति वचन कर्मणि ल्युट्। मुखनासिकया वचन इति 'कर्तृकरणे कृता बहुलम्' इति तृतीयासमास। तदेतदाह। **मुखसहितेत्यादिना**॥ मुखञ्च नासिकाचेति द्वन्द्वस्तु न। तथासति 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गाना' इति समाहारद्वन्द्वनियमात् 'स नपुसकम्' इति नपुसकत्वे 'ह्रस्वोनपुसके प्रातिपदिकस्य' इति ह्रस्वत्वे मुखनासिकवचन इत्यापत्ते। ननु अष्टादश भेदा किं सर्वेषामचामविशिष्टा नेत्याह। **तदित्थमिति**॥ इयता प्रबन्धेन यत् अचा भेदप्रपञ्चन तत् इत्थ वक्ष्यमाणप्रकारेण व्यवस्थित वेदितव्यमित्यर्थ। **अष्टादशभेदा इति**॥ अष्टादशप्रकारा इत्यर्थ। **दीर्घाभावादिति**॥ तथाच उदात्त-लृकारदीर्घ अनुदात्तलृकारदीर्घ स्वरितलृकारदीर्घ। ते च अनुनासिकास्त्रय अननुनासिकास्त्रय इति षड्भेदानामभावे सति ह्रस्वप्रपञ्च प्लुतप्रपञ्चश्च षड्विध इति लृकारस्य द्वादशविधत्वमेवेति

र्घाभावात्। एचामपि द्वादश। तेषां ह्रस्वाभावात्।

## १०। तुल्यास्यप्रयत्नं सवर्णम्। (१-१-९)

तात्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथ सवर्णसंज्ञं स्यात्। अकुहविसर्जनीयानां कण्ठ। इचुयशाना तालु। ऋटुरषाणां मूर्धा। लृतुलसानां दन्ता। उपूपध्मानीयानामोष्ठौ। ञमङणनाना नासिका च। एदै-

---

भाव। लृकारस्य दीर्घाभावे होतृ लृकार इत्यत्र सवर्णदीर्घे कृते होतॄकार इति ॠकारस्यैव तुल्यास्यसूत्रे अकस्सवर्ण इति सूत्रे च भाष्योदाहरणमेव प्रमाणम्। **ह्रस्वाभावादिति**॥ यद्येचो ह्रस्वास्स्युस्तर्हि वर्णसमाम्नाये त एव लाघवात् अ इ उ इत्यादिवत् पठ्येरन्। ननु दीर्घा गौरवात्। अत एच ह्रस्वा न सन्तीति विज्ञायते। एव च ह्रस्वप्रपञ्चषड्भेदाभावात् द्वादशविधत्वमेवैचामिति भाव। अथ 'अणुदित्सवर्णस्यचाप्रत्यय' इति अ इ उ इत्यादिसज्ञा वक्ष्यन् सवर्णसज्ञामाह। **तुल्यास्य**॥ आस्य मुख तत्स्थानसाम्यस्य सवर्णेष्वविशिष्टत्वादव्यावर्तकत्वादास्यशब्दोऽत्र न मुखमात्रपर। किंतु आस्ये मुखे भवमास्य तात्वादिस्थान 'शरीरावयवाद्यत्' इति भवार्थे यत्प्रत्यय। 'यस्येति च' इति प्रकृत्यन्त्यस्य अकारस्य लोप। प्रकृष्टो यत्न प्रयत्न। आस्य च प्रयत्नश्च आस्यप्रयत्नौ तुल्यौ आस्यप्रयत्नौ यस्य वर्णजालस्य तत्तुल्यास्यप्रयत्न परस्पर सवर्णसज्ञक स्यादिति भाव। तदाह। **ताल्वादिस्थानमित्यादिना**। **मिथः इति**॥ परस्परमित्यर्थ। कस्य कि स्थानमित्याकाक्षाया तद्व्यवस्थापकानि पाणिन्यादिशिक्षावचनान्यर्थत सगृह्णाति। **अकुहेत्यादिना**॥ अ इत्यष्टादश भेदा गृह्यन्ते। कु इति कादिपञ्चकात्मक कवर्ग। नचाणुदित्सूत्रस्येदानीमप्रवृत्ते कथमत्र अ इत्यष्टादशभेदाना ग्रहणमिति वाच्यम्। लौकिकप्रसिद्धिमाश्रित्यैव एतत्प्रवृत्ते। एवमग्रेऽपि कथञ्चित्समाधान बोध्यम्। अश्च कुश्च हश्च विसर्जनीयश्चेति विग्रह। विसर्जनीयशब्दोऽपि विसर्गपर्याय। **इचु यशेति**॥ इ इत्यष्टादश भेदा। चु इति चवर्ग। इश्च चुश्च यश्च शश्चेति विग्रह। तालु हनु। **ऋटुरषेति**॥ ऋ इत्यष्टादश भेदा। टु इति टवर्ग। आच टुश्च रश्च षश्चेति विग्रह। ऋशब्दस्य आ इति प्रथमैकवचनान्तम्। धाता इतिवत्। **लृतुलसेति**॥ लृ इत्यस्य द्वादश भेदा। तु इति तवर्ग। आच तुश्च लश्च सश्चेति विग्रह। लृशब्दस्यापि आ इत्येव प्रथमैकवचनान्तत्वम्। आ अलौ अल। दन्तशब्देन दन्तमूलप्रदेशो विवक्षित। अन्यथा भग्नदन्तस्य तदुच्चारणानुपपत्ते। **उपूपेति**॥ उ इत्यष्टादश भेदा। पु इति पवर्ग। उश्च पुश्च उपध्मानीयश्चेति विग्रह। उपध्मानीयशब्दमनुपदमेव स्वय व्याख्यास्यति। **ञमङणनेति**॥ ञश्च मश्च ङश्च णश्च नश्चेति विग्रह.। चकारेण स्वस्ववर्गीयस्थानसमुच्चय। **एदैतोरिति**॥ एच्च ऐच्च एदैतौ। तपरकरणमसन्देहार्थम्। नतु 'तपरस्तत्कालस्य' इति तत्कालमात्रग्रहणार्थम्। तेन प्लुतयोरपि सङ्ग्रह।

तो कण्ठतालु । ओदौतो कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिका अनुस्वारस्य । इति स्थानानि । प्रयत्नो द्विधा । आभ्यन्तरो बाह्यश्च । आद्यश्चतुर्धा । स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात् । तत्र स्पृष्टं प्रयतनं स्पर्शानाम् । ईषत्स्पृष्टमन्त स्थानाम् । विवृतमूष्मणां स्वराणां च । ह्रस्वस्यावर्णस्य

---

कण्ठश्च तालु चेति प्राण्यङ्गत्वात् समाहारद्वन्द्व । एकवत्त्व नपुसकत्व च । **ओदौतोरिति** ॥ ओच्च औच्च ओदौतौ । तपरकरण पूर्ववदसदेहार्थमेव । कण्ठश्च ओष्ठौ चेति प्राण्यङ्गत्वात्समाहारद्वन्द्व एकवद्भावो नपुसकत्व च । **वकारस्येति** ॥ दन्ताश्च ओष्ठौचेति समाहारद्वन्द्व । एकवत्त्व नपुसकत्वञ्च । **जिह्वामूलीयस्येति** ॥ जिह्वामूलीयशब्दमग्रे व्याख्यास्याति । एवमनुस्वारशब्दमपि । **इति स्थानानीति** ॥ इति एव प्रकारेण वर्णाभिव्याक्तिस्थानानि प्रपञ्चितानीत्यर्थ । ननु किमिह तुल्यास्यसूत्रे यत्किञ्चित् स्थानसाम्य विवक्षितम्, उत यावत्स्थानसाम्यम् । न तावदाद्य । तथा सति इकारस्य एकारस्य च तालुस्थानकतया सावर्ण्यापत्तौ भवत्येवेत्यत्र इकारादेकारे परे सवर्णदीर्घापत्ते । न च एकारस्य वर्णसमाम्नाये पाठसामर्थ्यादिकारेण न सावर्ण्यमिति वाच्यम् । एकारपाठस्य अक् इक् उक् इति प्रत्याहारेषु एकारग्रहणनिवृत्यर्थत्वसम्भवात् । किञ्च वकारलकारयोर्दन्तस्थानसाम्येन सावर्ण्यापत्तौ 'तोर्लि' इत्यत्र लकारेण वकारस्यापि ग्रहणात् तद्वानित्यत्र दकारस्य परसवर्णापात्ति । यवलपरे यवला वेत्यत्र लकारग्रहणन्तु यथासख्यार्थ भविष्यति । न द्वितीय । तथासाति कङयो कण्ठस्थानसाम्येऽपि ङकारस्य नासिकास्थानाधिक्येन सावर्ण्याभावापत्तौ 'चो कु' 'क्विन्प्रत्ययस्य' इत्यत्र ङकारस्य ग्रहणानापत्या प्राङ् इत्यादौ नुमो नकारस्य 'क्विन्प्रत्ययस्य' इति कुत्वेन ङकारानापत्ते । तस्मात्स्थानसाम्य दुर्निरूपमिति चेत् । अत्र ब्रूम । यावत्स्थानसाम्यमेव सावर्ण्यप्रयोजकम् । एवञ्च इकारस्य एकारस्य च तालुस्थानसाम्येऽपि एकारस्य कण्ठस्थानाधिक्यान्नसावर्ण्यम् । वलयोश्च न सावर्ण्यम । वकारस्य ओष्ठस्थानाधिक्यात् । एवञ्च 'तद्वानासा यजुष्येकेषाम्' इत्यादि निर्देशा उपपन्ना । ङकारस्य नासिकास्थानाधिक्येऽपि ककारेण सावर्ण्यमस्त्येव । आस्यभवस्थानसाम्यस्यैव सावर्ण्यप्रयोजकत्वात् । नासिकायाश्च आस्यानन्तर्गतत्वात् । उक्तञ्च भाष्ये । किम्पुनरास्य लौकिक ओष्ठात्प्रभृति प्राक्काकलकादिति । काकलको नाम चुबुकस्याधस्तात् ग्रीवाया-मुन्नतप्रदेश इति कैयट । तस्मादास्यभवयावत्स्थानसाम्य सावर्ण्यप्रयोजकमिति शब्देन्दुशेखरे विस्तर । ननु तुल्यास्यसूत्रे प्रयत्नशब्देन प्रशब्दबलादाभ्यन्तरयत्नो विवक्षित इति स्थितम् । तत्राभ्यन्तरत्वविशेषण किमर्थम्, व्यावर्त्याभावादित्यत आह । **यत्नोद्विधेति** ॥ यत्नानामाभ्यन्तरत्व बाह्यत्वञ्च वर्णोत्पत्ते प्रागूर्ध्वभावित्वमिति पाणिन्यादिशिक्षासु स्पष्टम् । **आद्य इति** ॥ आभ्यन्तरयत्न इत्यर्थ । कथञ्चातुर्विध्यमित्यत आह । **स्पृष्टेति** ॥ कस्य क प्रयत्न इत्याकाङ्क्षाया तद्व्यवस्थापकशिक्षावचनानि पठति । **तत्रेति** ॥ तेषु मध्य इत्यर्थ । **प्रयतनमिति** ॥ प्रयत्न इत्यर्थ । स्पर्शादिशब्दानग्रे व्याख्यास्याति । ह्रस्वस्यावर्णस्य सवृतमित्यन्वय । एतावदेव शिक्षावचन । नन्वेव दण्ड आटकमित्यत्र अकारस्य आकारस्य च विवृतसवृतप्रयत्नभेदेन सावर्ण्या-

प्रयोगे संवृतम् । प्रक्रियादशायां तु विवृतमेव । एतच्च सूत्रकारेण ज्ञापितम् । तथा हि ।

## ११ । अ अ । (८-४-६८)

विवृतमनूद्य संवृतोऽनेन विधीयते । अस्य चाष्टाध्यायी सम्पूर्णा प्रत्यसिद्धत्वाच्छास्त्रदृष्ट्या विवृतत्वमस्त्येव । तथा च सूत्रम् ।

## १२ । पूर्वत्रासिद्धम् । (८-२-१)

---

भावात् सवर्णदीर्घो न स्यादित्यत आह । **प्रयोग इति** ॥ शास्त्रीयप्रक्रियाभि परिनिष्ठिताना राम कृष्ण इत्यादिशब्दाना प्रयोगे क्रियमाण एव ह्रस्वस्यावर्णस्य सवृतत्वमित्यर्थ । **प्रक्रियेति** । शास्त्रीयकार्यप्रवृत्तिसमये तु ह्रस्वस्याप्यवर्णस्य विवृतत्वमेवेत्यर्थ । शिक्षावचनसिद्ध स्वाभाविक ह्रस्वावर्णस्य सवृतत्व प्रच्याव्य शास्त्रमूलभूते वर्णसमाम्नाये तस्य विवृतत्वेनैवोपदिष्टतया कृत्स्नशास्त्रीयप्रक्रियासमये ह्रस्वस्याप्यवर्णस्य विवृतत्वेन दण्डाढकमित्यादौ सवर्णदीर्घादिकार्यनिर्बाधमिति अइउणिति सूत्रभाष्ये स्पष्टम् । एवञ्च ह्रस्वस्यावर्णस्य सवृतमिति शिक्षावचन परिशेषात् परिनिष्ठितदशायामेव पर्यवस्यतीति न तदानर्थक्यमिति भाव । अयञ्च शिक्षावचनसकोचस्सूत्रकारस्यापि सम्मत इत्याह । **एतच्चेति** । तदेवोपपादयितु प्रतिजानीते । **तथाहीति** । यथा एतत् ज्ञापित भवति तथा स्पष्टमुपपाद्यत इत्यर्थ । **अ अ** । व्याकरणशास्त्रस्येदमन्तिम सूत्र द्विपदम् । तत्र अ इति प्रथम पद विवृतपर लुप्तषष्ठीकम् । द्वितीयन्तु सवृतपर लुप्तप्रथमाकम् । ततश्च शिक्षावचनसिद्ध स्वाभाविक सवृतत्व प्रच्याव्य वर्णसमाम्नाये विवृतत्वेनोपदिष्टस्य अवर्णस्य सवृत अवर्णो भवतीत्यर्थ । तदाह । **विवृतमनूद्येति** । **विधीयत इति** । प्रतिप्रसूयत इत्यर्थ । ननु प्रक्रियादशायामप्येतत्सूत्र कुतो न प्रवर्तेत इत्यत आह । **अस्यचेति** । अस्य अ अ इति सूत्रस्य, स्वप्राक्तनीं कृत्स्ना अष्टाध्यायी प्रति असिद्धत्वात् अविद्यमानत्वात् प्रक्रियादशाया विवृतत्वमस्त्येवेत्यन्वय । ननु प्रक्रियादशाया ह्रस्वावर्णस्य कथ स्वाभाविकात्सवृतत्वात् प्रच्यव , कथ वा विवृतत्वम्, तस्य आकारादिधर्मत्वादित्यत आह । **शास्त्रदृष्ट्येति** । असिद्धत्वमिह न वास्तवात्यन्तासत्वं विवक्षितम् । किं तर्हि अविद्यमानत्वारोपात्मकमेव । एतावता न स्वाभाविकस्य सवृतत्वस्यावर्णात् प्रच्यव । नापि विवृतत्वम् । तस्य वास्तव प्रक्रियार्थ विवृतत्वस्यारोपादिति भाव । ननु 'अअ' इति सूत्रस्य कृत्स्नामष्टाध्यायीं प्रत्यसिद्धत्वे किं प्रमाणमित्यत आह । **तथा च सूत्रमिति** । **चोह्यर्थे** । तथा तेन प्रकारेण बोधक सूत्रमस्तिहीत्यर्थ । तथाविध सूत्रमाह । **पूर्वत्रासिद्धम्** ॥ पाणिनिप्रणीता अष्टाध्यायी । तत्र अष्टमाध्याये द्वितीयपादस्येदमादिम सूत्रम् । इत प्राक्तन कृत्स्न सूत्रजाल सपादसप्ताध्यायीति व्यवह्रियते । उपरितनन्तु कृत्स्न सूत्रजाल त्रिपादीति व्यवह्रियते इति स्थिति । तत्र यदीद सूत्र स्वतन्त्रविधिस्स्यात् तदा इत पूर्वस्मिन् शास्त्रे प्रवर्तमाने उपरितन शास्त्रमसिद्ध स्यादित्यर्थो लभ्येत । ततश्च सपादसप्ताध्यायी प्रति त्रिपाद्यसिद्धेति पर्यवस्येत् । एव सति त्रिपाद्यामपि पूर्व शास्त्र प्रति पर शास्त्रमसिद्धमिति अर्थो न लभ्येत । तथा-

अधिकारोऽयम्, तेन सपादसप्ताध्यायी प्रति त्रिपाद्यसिद्धा। त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धं स्यात्। बाह्यप्रयत्नस्त्वेकादशधा। विवार संवार· श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्त स्वरितश्चेति।

---

सति किमु उक्त किम्वुक्तमित्यत्र मोऽनुस्वार इति शास्त्र त्रैपादिक प्रति 'मय उञो वो वा' इति वत्वशास्त्र त्रैपादिक प्रति नासिद्ध स्यादित्यत आह। **अधिकारोऽयमिति**॥ अधिक्रियते उपरितनसूत्रजालशेषत्वेन पठ्यत इत्यधिकार। कर्मणि घञ्। 'घञजबन्ता पुसि' इति पुस्त्वम्। अयमिति तदपेक्षया पुल्लिङ्गनिर्देश। इद सूत्रमुपरितनसूत्रेष्वनुवृत्त्यर्थमेव। नतु स्वतन्त्रविधिरिति यावत्। 'मयउञो वोवा' इति सूत्रे पूर्वत्रासिद्धमित्यनुवर्तते। ततश्च मय परस्य उञो वकारो वा स्यात्। इद शास्त्र पूर्वत्रासिद्धमिति तदेकवाक्यत्व सपद्यते। तत्र च अनुवृत्तपूर्वशब्देन इत प्राक्तन त्रिपादीस्थ सपादसप्ताध्यायीस्थञ्च कृत्स्न सूत्रजाल विवक्षितमिति मोऽनुस्वार इति त्रैपादिक शास्त्र प्रति 'मय उञो वोवा' इति शास्त्रस्यासिद्धत्व निर्बाधमित्याह। **तेनेति**॥ अधिकारत्वेनेत्यर्थ। **परं शास्त्रमसिद्धमिति**॥ असिद्धत्वञ्चात्र नात्यन्तासत्वम्। किन्तु पूर्वशास्त्रदृष्ट्येत्यनुपदमेवोक्तम्। परशास्त्रमित्यनेन प्रक्रियाकौमुद्यादिग्रन्थोक्त कार्यासिद्धत्वमप्रामाणिकमिति ध्वनितम्¹। कार्यासिद्धत्व पूर्वपक्षयित्वा शास्त्रासिद्धत्वस्यैवात्रसूत्रे 'असिद्धवदत्राभात्' इति सूत्रे च भाष्ये सिद्धान्तितत्वात्। शास्त्रासिद्धत्वकार्यासिद्धत्वयो फलभेदस्तु शब्देन्दुशेखरे व्यक्त। अस्माभिश्च स्वादिसन्धौ मनोरथ इत्यत्र मूलव्याख्यावसरे हलन्तशब्दाधिकारे च अदश्शब्दप्रक्रियाव्याख्यावसरे प्रपञ्चयिष्यते। तदेव 'अ अ' इति सवृतविधे स्वप्राक्तनी कृत्स्ना अष्टाध्यायी प्रत्यसिद्धत्वात् प्रक्रियादशायामवर्णस्य ह्रस्वस्य विवृतत्वमेव। परिनिष्ठितदशायामेव सवृतत्वमिति स्थितम्। यद्यपि परिनिष्ठितदशाया सवृतविधि क्वचिदप्यस्मिन् शास्त्रे नोपयुज्यते। तथापि परिनिष्ठिते सवृतविधिबलादेव सवृतत्वेन ज्ञाने सत्येव प्रयोगार्हतेति कल्प्यम्। विवृतसवृतयोरुच्चारणभेदो वा कल्प्यमित्यल बहुना। अथ बाह्यप्रयत्नान्प्रपञ्चयति। **बाह्यप्रयत्नस्त्विति**॥ प्रशब्दोऽत्र

---

¹ अय च पक्ष भाष्ये बहुत्र दूषित। तत्र हेतुस्तु लक्ष्येषु समीहितरूपासिद्धिरेव। शब्देन्दुशेखरेऽपि अय विषयो बहुधा प्रपञ्चित। पूर्वत्रासिद्धमित्यनेन सिद्धे असिद्धत्वारोप प्रतिपाद्यते। तत्र निरधिष्ठानारोपस्य असभवात् मूलोदाहरणाय लक्ष्ये विप्रतिषेधे पर कार्यमित्यनेन परस्यैव कार्यस्य प्रवृत्तेरावश्यकतया प्रकृते मनोरथ इत्यत्र हशिचेतिसूत्रविधीयमानोत्वरूपकार्यापेक्षया परस्य रोरीति सूत्रेण विधीयमानलोपरूपस्यैव कार्यस्य प्रथमत प्रवृत्तौ तास्मिन् लोपरूपे कार्ये पूर्वत्रासिद्धमित्यनेन अभावप्रतियोगित्वारोपेऽपि देवदत्तहन्तरि हते देवदत्तस्य नोन्मज्जनमिति न्यायेन प्रकृते रोरभावात् हशिचेत्युत्वस्य अप्रवृत्तौ इष्टरूपासिद्धि स्पष्टैव। शास्त्रासिद्धत्वपक्षे तु यद्यच्छास्त्र त्रैपादिक प्रवृत्युन्मुख तत्तच्छास्त्र एव असिद्धत्वारोपात् पूर्वशास्त्रप्रतिबन्धकस्य परशास्त्रस्य उच्छेदबुद्धौ सत्या पूर्वशास्त्रप्रवृत्तिर्निरङ्कुशा। वस्तुतस्तु कार्यासिद्धत्वपक्षे मनोरथ इत्येतल्लक्ष्यासिद्धिकथनं न चारुतरम्। दर्शनाभावरूपे लोपे अभावारोपस्य दर्शनारोपरूपत्वेन रोस्सत्वात्। अभावाभावस्य प्रतियोगिरूपत्वात्। अमू अमी इत्यादि लक्ष्यासिद्धि× पर एतत्पक्षाभ्युपगमे दोष इत्यभियुक्ता॥

खयां यमा खय: ᳵकᳵपौ विसर्ग शर एव च ।
एते श्वासानुप्रदाना अघोषाश्च विवृण्वते ॥
कण्ठमन्ये तु घोषा स्यु संवृता नादभागिन ।
अयुग्मा वर्गयमगा यणश्चाल्पासव स्मृता ॥

वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये यमो नाम पूर्वसदृशो वर्ण प्रातिशाख्ये प्रसिद्ध । पलिक्क्नी, चख्ख्नतु, अग्ग्नि, घ्घ्नन्तीत्यत्र क्रमेण कखगघेभ्य परे तत्सदृशा एव यमा । तत्र वर्गाणा प्रथमद्वितीया खय, तथा तेषामेव यमा॰, जिह्वामूलीयोपध्मानीयौ विसर्ग शषसाश्चेत्येतेषां विवार श्वासोऽघोषश्च । अन्येषां तु संवारो नादो घोषश्च । वर्गाणां प्रथमतृतीयपञ्चमा

---

चिन्त्य । प्रशब्दबलेन आभ्यन्तरयत्नस्यैव प्रयत्नशब्दवाच्यताया तुल्यास्यसूत्रे उक्तत्वात् । यत्नो द्विधेत्युपक्रमाच्च । अविवक्षितार्थो वाऽत्र प्रशब्द । उदात्तानुदात्तस्वरितशब्दा धर्मपरा । कस्य को बाह्यप्रयत्न इत्याकाक्षाया तद्व्यवस्था श्लोकद्वयेन सगृह्णाति । **खयामिति** ॥ यमशब्दो व्याख्यास्यते । श्वास अनुप्रदान येषा ते श्वासानुप्रदाना श्वासाख्यबाह्ययत्नवन्त । **विवृण्वते कण्ठमिति** ॥ विवार एषा यत्न इति भाव । सवृता सवाराख्ययत्नवन्त । नादभागिन नादाख्ययत्नभाज । **अयुग्मा वर्गयमगा इति** ॥ कादिपञ्चक चादिपञ्चक टादिपञ्चक तादिपञ्चक पादिपञ्चकमिति, पञ्च वर्गा । वर्गगता यमगताश्च अयुग्मा प्रथमतृतीयपञ्चमवर्णा इत्यर्थ । अल्पासव अल्पप्राणा । अथ श्लोकद्वय व्याख्यास्यन् यमशब्द तावत् सामान्यतो व्याचष्टे । **वर्गेष्वित्यादिना** ॥ आद्याना चतुर्णामिति निर्द्धारणे षष्ठी । एकैकस्मादित्यध्याहार्यम् । तेन 'अन्यारादितरर्ते' इति परशब्दयोगे पञ्चमी । प्रसङ्गात् आद्यानाञ्चतुर्णामिति निर्धारणषष्ठ्यनुपपन्नेति निरस्तम् । **यमोनामेति** ॥ नामशब्द इति पर्याय । तदयमर्थ । कादि चादि टादि तादि पादि पञ्चकात्मकेषु वर्गेषु एकैकस्य वर्गस्य आद्याना चतुर्णाम्मध्ये एकैकस्मात् पञ्चमे वर्णे परे मध्ये पूर्ववर्णसदृशो यम इति प्रातिशाख्ये प्रसिद्धेति । अथ यमानुदाहृत्य दर्शयति । **पलिक्क्नीत्यादिना** ॥ **तत्सदृशा एव यमा इत्यन्तेन** ॥ एव वर्गान्तरयमानामप्युदाहरण याच्च्ञेत्यादि द्रष्टव्यम् । तदेव यमशब्द सामान्यतो व्याख्याय श्लोकद्वय व्याचष्टे । **तत्रेत्यादिना** ॥ तत्र खय इत्यस्य व्याख्या वर्गाणा प्रथमद्वितीया खय इति । खया यमा इत्यस्य विवरण तथा तेषामेव यमा इति । ᳵकᳵपौ इत्यस्य विवरण जिह्वामूलीयोपध्मानीयाविति । विसर्गशब्द प्रसिद्धत्वात् स एवोपात्त । शर इत्यस्य विवरण शषसा इति । एते श्वासानुप्रदाना अघोषाश्च विवृण्वते कण्ठमित्येतद्व्याचष्टे । **एतेषां विवारः श्वासः अघोषश्चेति** ॥ अन्ये तु घोषास्स्युस्संवृतानादभागिन इत्येतद्व्याचष्टे । **अन्येषान्तु संवारो नादो घोषश्चेति** ॥ अयुग्मा वर्गयमगा इत्येतद्व्याचष्टे । **वर्गाणां प्रथमतृतीयपञ्चमाः प्रथमतृतीययमाविति** ॥

प्रथमतृतीययमौ यरलवाश्चाल्पप्राणा । अन्ये (द्वितीयचतुर्थौ शलश्च) महाप्राणा इत्यर्थ । बाह्यप्रयत्नाश्च यद्यपि सवर्णसञ्ज्ञायामनुपयुक्ता, तथाप्यान्तरतम्यपरीक्षायामुपयोक्ष्यन्त इति बोध्यम् । कादयो मावसाना स्पर्शा । यरलवा अन्तस्था । शषसहा ऊष्माण । अच. स्वरा. । ≍क ≍प इति कपाभ्या प्रागर्धविसर्गसदृशौ जिह्वामूलीयोपध्मानीयौ । अ अ इत्यच. परावनुस्वारविसर्गौ । इति (स्थान) यत्नविवेक । 'ऋॢवर्णयोर्मिथ सावर्ण्य वाच्यम्' (वा १५०) ।

---

पञ्चमाना यमाभावादिति भाव । यणश्चात्पासव स्मृता इत्येतद्व्याचष्टे । **यरलवाश्चाल्पप्राणा इति** ॥ ननु श्लोकद्वये महाप्राण एतेषामिति नोक्तम् । अतो न्यूनतेत्याशङ्क्य तदपि परिशेषादुक्तप्रायमित्याह । **अन्ये महाप्राणा इति** ॥ वर्गाणा द्वितीयचतुर्थौ द्वितीयचतुर्थयमा शषसाश्च अन्यशब्देन विवक्षिता । यमाना यत्नविशेषकथन वस्तुस्थितिकथनमात्रम् । अत्र शास्त्रे तदुपयोगाभावात् । तदयमत्र मध्यसिद्धान्तकौमुद्या वरदराजीयस्सङ्ग्रह । खरो विवारश्वासा अघोषाश्च । हशस्सवारनादा घोषाश्च । वर्गाणा प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणा । वर्गाणा द्वितीयचतुर्थाश्शलश्च महाप्राणा इति । नन्विह बाह्ययत्नप्रपञ्चन व्यर्थ, तुल्यास्यसूत्रे प्रयत्नशब्दस्य आभ्यन्तरयत्नमात्रपरत्वादित्याशङ्कते । **बाह्ययत्नाश्चेति । यद्यपीति** ॥ समुदायश्शङ्काद्योतक । परिहरति । **तथापीति** ॥ सवर्णसञ्ज्ञाप्रस्तावे बाह्ययत्नानामुपयोगाभावेऽपि 'स्थानेन्तरतम' इति वक्ष्यमाणाऽन्तरतम्यविचारे तेषामुपयोगसत्वान्न वैयर्थ्यम् । इह तत्प्रपञ्चन तुल्यास्यसूत्रे आभ्यन्तरत्वविशेषणव्यावर्त्यत्वेनोपास्थिततत्वात्प्रासङ्गिकमिति भाव । उदात्तादियत्नत्रयस्य तु अज्धर्मत्वस्य प्रसिद्धत्वादिह न तद्व्यवस्थोक्ता । अथ स्पृष्ट प्रयतन स्पर्शानामित्यादि सन्दर्भे उपन्यस्तान् स्पर्शादिशब्दान् व्याचष्टे । **कादय इत्यादिना** ॥ क आदि येषान्ते कादय म अवसाने येषान्ते मावसाना । इदञ्च लोकप्रसिद्धपाठापेक्षम् । **इति स्थानयत्नविवेक इति** ॥ स्थानयत्नविवेचन समाप्तमित्यर्थ । स्थानप्रयत्नेति प्रशब्दपाठस्तु चिन्त्य अविवक्षितार्थो वा प्रशब्द । ऋॢवर्णयोर्मूर्द्धदन्तात्मकभिन्नस्थानकत्वात् सवर्णसञ्ज्ञायामप्राप्तायामृकारॢकारयोस्सवर्णविधिरिति तद्विधायक वार्तिक अर्थतस्सङ्गृह्य पठति । **ऋॢवर्णयोऽर्मिथः** ॥ आच आच रलौ ऋशब्दस्य ॢशब्दस्य च आ इति प्रथमैकवचनम् । ऋ ॢ औ इति स्थिते ऋकारस्य 'ऋतो ङि सर्वनामस्थानयो' इति गुण । अकार "उरण्रपर" इति लपरत्व । ऋकारस्य यणादेशो रेफ रलौ च तौ वर्णौ च ऋॢवर्णौ । तयोर्मिथ परस्पर सावर्ण्य सवर्णत्व वक्तव्यम् । तुल्यास्यसूत्रेण तदलाभादिति सूत्रकारश्शिक्ष्यते । उक्तानुक्तदुरुक्तचिन्तनात्मक हि वार्तिकम् । **अकारहकारयोरिति** ॥ उभयो कण्ठस्थानविवृतप्रयत्नसाम्यात्सावर्ण्य प्राप्तम् । अकारस्य कवर्गेण तु न सावर्ण्यप्रसक्ति । कण्ठस्थानसाम्ये सत्यपि विवृतस्पृष्टप्रयत्नभेदात् । विसर्जनीयस्य तु अकारोपरि शर्षु च पाठस्योपसङ्ख्यातत्वेन विवृतत्वेऽपि तेन अकारस्य न सवर्णसञ्ज्ञा । प्रयोजनाभावात् । ततश्च अकारस्य हकारेण सावर्ण्य परिशिष्यत इति भाव । **इकारशकारयोरिति** ॥ तालुस्थानविवृतप्रयत्नसाम्यात् उभयोस्सावर्ण्य प्राप्तम् । इकारस्य चवर्गेण यकारेण

अकारहकारयोरिकारशकारयोर्ऋकारषकारयोर्लृकारसकारयोश्च मिथः सावर्ण्ये प्राप्ते ।

## १३ । नाऽऽज्झलौ । (१-१-१०)

आकारसहितोऽच् आच्, स च हल्चेत्येतौ मिथः सवर्णौ न स्तः । तेन दधीत्यस्य हरति शीतलं षष्ठं सान्द्रमित्येतेषु परेषु यणादिकं न । अन्यथा दीर्घादीनामिव हकारादीनामपि ग्रहणकशास्त्रबलादच्त्वं स्यात् । तथा हि ।

---

च न सावर्ण्यप्रसक्तिः । इकारस्य विवृतत्वाच्चवर्गस्य स्पृष्टत्वात् यकारस्य ईषत्स्पृष्टत्वाच्च । अत इकारस्य शकारेण सावर्ण्यं परिशिष्यत इति भावः । **ऋकारषकारयोरिति** ॥ मूर्धस्थानविवृतयत्नसाम्यात् उभयोस्सावर्ण्यं प्राप्तम् । ऋकारस्य टवर्गेण रेफेण च न सावर्ण्यप्रसक्तिः । ऋकारस्य विवृतत्वात् टवर्गस्य स्पृष्टत्वात् रेफस्य ईषत्स्पृष्टत्वाच्च । अत ऋकारषकारयोस्सावर्ण्यं परिशिष्यत इति भावः । **लृकारसकारयोरिति** ॥ दन्तस्थानविवृतप्रयत्नसाम्यादुभयोस्सावर्ण्यं प्राप्तम् । लृकारस्य तवर्गेण लकारेणच न सावर्ण्यप्रसक्तिः । लृकारस्य विवृतत्वात्तवर्गस्य स्पृष्टत्वात् लकारस्य ईषत्स्पृष्टत्वाच्च । अत लृकारस्य सकारेण सावर्ण्यं परिशिष्यते ॥ एवं प्राप्ते प्रतिषेधति । **नाऽऽज्झलौ** ॥ आ सहित अच् आच् । शाकपार्थिवादित्वात्सहितशब्दस्य लोपः । सच हल्च आज्झलौ । तुल्यास्यसूत्रात्सवर्णमित्यनुवर्तते । तच्च पुल्लिङ्गद्विवचनान्ततया विपरिणम्यते । तदाह । **आकारसहितोऽजित्यादिना** ॥ ननु किमर्थोऽयं प्रतिषेध इत्यत आह । **तेनेत्यादि यणादिकं नेत्यन्तम्** ॥ तेन प्रतिषेधेन, आदिना सवर्णदीर्घसङ्ग्रहः । दधीति इकारस्य हकारे षकारे सकारे च परे "इकोयणचि" इति यणादेशः । शीतळमित्यत्र शकारे परे सवर्णदीर्घश्च नभवतीत्यर्थः । नन्वस्तु अकारहकारयोः इकारशकारयोः ऋकारषकारयोः लृकारसकारयोश्च सावर्ण्यम् । तथापि दधि षष्ठमित्यादौ यणादिकं न प्रसक्तम् । अच्परकत्वाभावादित्यत आह । **अन्यथेत्यादिना** ॥ अन्यथा तेषां सावर्ण्याभ्युपगमे दीर्घादीनामिव हकारादीनामप्यच्त्वं स्यादित्यन्वयः । ननु वर्णसमाम्नाये हकारादीनां अकारचकारमध्यगत्वाभावात् कथमच्त्वमित्यत आह । **ग्रहणकशास्त्रबलादिति** ॥ गृह्णन्त्यकारादयस्स्वसवर्णान् येन तत् ग्रहणं । करणे-ल्युट् स्वार्थे कः । अणुदित्सूत्रादित्यर्थः । यद्यप्यच्छब्दवाच्यत्वं वर्णसमाम्नायिकानामेव वर्णानाम् । तथापि इकोयणचीत्यादौ अच्छब्देन अकारादिषूपस्थितेषु तैः अणुदित्सूत्रबलेन स्वस्वसवर्णानामाकारादीनामुपस्थितिरस्ति । ततश्चात्राच्पदवाच्याकारादिवाच्यत्वादाकारादीनामपि लक्षणया अच्छब्देन ग्रहणं स्यादित्यर्थः । न च इकोयणचीत्यादौ शक्यार्थमादायैवोपपत्तेर्नलक्षणासंभवः । अणुदित्सूत्रन्तु अस्यच्वावित्यादौ सावकाशमिति वाच्यम् । त्वादिभ्य इत्यादिनिर्देशबलेन प्रत्याहाराणां स्ववाच्यवाच्येषु लक्षणावश्यम्भावात् । तथाच अच्त्वं स्यादित्यस्य अच्पदबोध्यत्वं स्यादित्यर्थः । किन्तद्ग्रहणकशास्त्रमित्याकाङ्क्षायान्तदुपपादनं प्रतिजानीते । **तथाहीति** ॥

## १४ । अणुदित्सवर्णस्य चाप्रत्ययः । (१-१-६९)

प्रतीयते विधीयत इति प्रत्यय ,अविधीयमानोऽणुदिच्च सवर्णस्य संज्ञा स्यात् । अत्राण्परेण णकारेण । कु चु टु तु पु एते उदित । तदेवम् । अ इत्यष्टादशानां संज्ञा । तथेकारोकारौ । ऋकारस्त्रिंशत । एवं ऌकारोऽपि । एचो द्वादशानाम् । एदैतोरोदौतोश्च न मिथ सावर्ण्यम् । 'ऐऔच्' इति सूत्रारम्भसामर्थ्यात् । तेनैचश्चतुर्विंशते संज्ञा स्युरिति नापादनीयम् । 'नाज्झलौ' (सू १३)

---

**अणुदित्सवर्णस्य** ॥ प्रत्ययशब्दस्य अणादिप्रत्ययपरत्वे 'त्यदादीनाम' 'इदमइश्' इत्यादीना पर्युदासो न स्यादित्यतो व्याचष्टे । **प्रतीयत इति** ॥ उत् इत् यस्य स उदित् कु चु टु तु पु इत्यादि ।चकारात्स्वरूपमित्यत स्वमित्यनुवर्तते । तच्च षष्ठ्यन्ततया विपरिणम्यते । तदाह । **अविधीयमान इत्यादिना** ॥ अणिति पूर्वेण परेण वा प्रत्याहार इति सशये निर्धारयति । **अत्रेति** ॥ अस्मिन्नेव सूत्रे अण् परेण णकारेण । इतरत्र तु 'अणोऽप्रगृह्यस्य' इत्यादौ पूर्वेणैवेत्यर्थ । अत्र च आचार्यपारम्पर्योपदेशरूप व्याख्यानमेव शरणम् । एवञ्चाणुदित्सूत्रेणानेन अकारादिभिश्चतुर्भिर्दीर्घप्लुतानामिव सवर्णभूतहकारादीनामपि ग्रहणादच्त्वात्तेषु परेषु इकारस्य यणादिक स्यादिति नाज्झलाविति प्रतिषेध आवश्यक इति स्थितम् । अणुदित्सूत्रस्य फलमाह । **तदेवमिति** ॥ तत् अणुदित्सूत्र एव वक्ष्यमाणप्रकारेण फलतीत्यर्थ । **त्रिंशत इति** ॥ ऋ ऌ वर्णयोर्मिथस्सवर्णतया ऋकारेण स्वाष्टादशभेदाना ऌकारीयद्वादशभेदाना च ग्रहणादिति भाव । **एवं ऌकारोऽपीति** ॥ ऋकारस्यापि ऌकारसवर्णत्वादिति भाव । ननु एकारेण ऐकारप्रपञ्चोऽपि गृह्येत ऐकारेण एकारप्रपञ्चश्च । तथा ओकारेण औकारप्रपञ्चो गृह्येत । औकारेण ओकारप्रपञ्चश्च । ततश्च एचश्चतुर्विंशतेस्सञ्ज्ञास्युरित्येव वक्तव्यम् । नतु द्वादशानामित्यत आह । **एदैतोरिति** ॥ कुतो न सावर्ण्यमित्यत आह । **ऐ औजिति** ॥ यदि ह्येदैतो ओदौतोश्च परस्पर सावर्ण्य स्यात्तर्हि एकारेण ऐकारप्रपञ्चस्य ओकारेण औकारप्रपञ्चस्य च अकारादिभिर्दीर्घप्लुतानामिव ग्रहणसम्भवात् 'ऐऔच्' इति सूत्रन्नारभ्येत । आरभ्यते च । अत एदैतोरोदौतोश्च न परस्पर सावर्ण्यमिति विज्ञायत इत्यर्थ । अच् इच् एच् इत्यादि प्रत्याहारास्तु ङकारेणैव निर्वाह्या । न च 'एचोऽयवायाव' इत्यत्र यथासङ्ख्यार्थमैऔजिति सूत्रमस्त्विवति वाच्यम् । तत्र 'स्थानेऽन्तरतम' इति सूत्रेणैव निर्वाहस्य वक्ष्यमाणत्वादिति भाव । वस्तुतस्तु, 'ऐ औच्' इति सूत्राभावे 'वृद्धिरादैच्' 'न य्वाभ्या पदान्ताभ्या पूर्वौ तु ताभ्यामैच्' 'प्लुतावैच इदुतौ' इत्यादौ एङ्ग्रहणापत्तौ एदैतोरपि ग्रहणे प्रसक्ते तन्निवृत्त्यर्थमैच्प्रत्याहार आवश्यकइति तदर्थमैऔजित्यारम्भणीयमेव । अत ऐऔजिति सूत्रारम्भस्य चरितार्थत्वात् एदैतोरोदौतोश्च मिथस्सावर्ण्याभावसाधकत्वकथनमनुपपन्नमेव । एदैतोरोदौतोश्च मिथस्सावर्ण्याभावस्तु वृद्धिरादैजित्यादौ क्वचिदैज्ग्रहणात् 'अदेङ्गुण' इत्यादौ क्वचिदेङ्ग्रहणाच्च सुनिर्वाह । अन्यथा सर्वत्र एङ्ग्रहणमेव ऐज्ग्रहणमवे वा कुर्यात् । तावतैव चतुर्णां ग्रहणसम्भवात् । अत एच् एङिति प्रत्याहारद्वयग्रहणसामर्थ्यादेदैतोरोदौतोश्चे न मिथस्सावर्ण्यम् । 'प्लुतावैच इदुतौ' 'एचोऽप्रगृह्यस्य' इति प्रत्याहारद्वयग्रहणवैयर्थ्याच्चेति शब्देन्दुशे-

इति सावर्ण्यनिषेधो यद्यप्याक्षरसमाम्नायिकानामेव, तथापि हकारस्याकारो न सवर्ण । तत्राकारस्यापि प्रश्लिष्टत्वात् । तेन 'विश्वपाभि ' इत्यत्र 'हो ढ'

---

खरे प्रपञ्चितम् । **तेनेति** ॥ एदैतोरोदौतोश्च मिथस्सावर्ण्याभावेनेत्यर्थ । **नापादनीयमिति** ॥ नाशङ्कनीयमित्यर्थ । एवञ्च एकारेण सह वर्तत इति सै हेसैरित्यत्र 'एङ् ह्रस्वात्' इति सबुद्धिलोपो न । ग्लाव ग्लाव इत्यत्र 'औतोऽशसो ' इत्यात्वञ्च न । स्यादेतत् । हकारस्य आकारस्य च सवर्णसज्ञा स्यात् स्थानप्रयत्नसाम्यात् । अज्झलामेव सावर्ण्यनिषेधात् वार्णसमाम्नायिकानामेव वर्णाना अज्झल्शब्दवाच्यत्वात् । आकारप्रश्लेषे च प्रमाणाभावात् । नचाकारस्याच्त्वात् तेन आकारस्यापि अणुदित्सूत्रेण ग्रहणादाकारहकारयोर्नसावर्ण्यमिति वाच्यम् । ग्रहणकसूत्र हि लब्धात्मकमेव सत् 'अस्यच्वौ' इत्यादौ प्रवृत्तिमर्हति । नाज्झलाविति प्रवृत्तिदशायाञ्च ग्रहणकशास्त्र नलब्धात्मकम् । तद्धि सवर्णपदघटितम् । सवर्णपदार्थावगमोत्तरमेव लब्धात्मक सवर्णसज्ञाविधायकञ्च तुल्यास्यसूत्र सामान्यत स्वार्थं बोधयदपि नाज्झलावित्यपवादविषय परिहृत्य तदन्यत्रैव पर्यवसन्न स्वकार्यक्षमम् । तदुक्त 'प्रकल्प्यापवादविषय उत्सर्गोऽभिनिविशत' इति । उक्तञ्च भाष्ये 'वर्णानामुपदेशस्तावत् उपदेशोत्तरकाला इत्सज्ञा । इत्सज्ञोत्तरकाल आदिरन्त्येनेति प्रत्याहार । प्रत्याहारोत्तरकाला सवर्णसज्ञा । तदुत्तरकालमणुदित्सूत्रम् । इत्येतेन समुदितेन वाक्येनान्यत्र सवर्णाना ग्रहण भवति' इति । अन्यत्र 'अस्यच्वौ' इत्यादावित्यर्थ । अत्र भाष्ये प्रत्याहारोत्तरकाला सवर्णसज्ञेत्यनेन नाज्झलाविति निषेधसहित सावर्ण्यविधिर्विवक्षित । केवलसावर्ण्यविधे प्रत्याहारानपेक्षत्वेन प्रत्याहारोत्तरकालिकत्वनियमासम्भवात् । तथाचाणुदित्सूत्रस्य नाज्झलाविति निषेधसाहिततुल्यास्यसूत्रप्रवृत्ते प्रागलब्धात्मकत्वात् । तेन नाज्झलावित्यत्र अज्ग्रहणेन सवर्णाना ग्रहणाभावात् सावर्ण्यविधिनिषेधाभावात् आकारहकारयोस्सावर्ण्य स्यादिति शङ्कते । **नाज्झलाविति सावर्ण्येत्यादिना** ॥ यद्यपीति सभावनायाम् । अक्षरसमाम्नायश्चतुर्दशसूत्री । तत्र भवा आक्षरसमाम्नायिका । 'बह्वचोऽन्तोदात्तात्' इति ठञ् । न च नाज्झलाविति प्रवृत्तिदशायामणुदित्सूत्रप्रवृत्त्यभावेऽपि तत्र अजित्यनेन लक्षणया दीर्घप्लुताना ग्रहणमस्तु । प्रत्याहाराणा स्ववाच्यवाच्येषु लक्षणाया अनुपदमेव प्रपञ्चितत्वादिति वाच्यम् । स्ववाच्यवाच्येषु हि प्रत्याहाराणा लक्षणा । न चात्राच्छब्दवाच्याकारादिवाच्यता दीर्घप्लुतानामस्ति । अणुदित्सूत्रस्येदानीमप्रवृत्तेरिति भाव । परिहरति । **तथापीति** ॥ वार्णसमाम्नायिकानामेव नाज्झलाविति निषेध इत्यभ्युपगमेऽपि हकारस्य आकारो न सवर्ण इत्यर्थ । कुत इत्यत आह । **तत्राकारस्यापीति** ॥ अपिशब्दो व्युत्क्रम. । तत्र नाज्झलाविति सूत्रे । आ सहित अच् आच् इत्याकारस्यापि सवर्णदीर्घेण प्रश्लिष्टत्वादित्यर्थ । नन्वस्तु हकारस्य आकारस्य च सावर्ण्यं, किन्तत्प्रतिषेधार्थेन आकारप्रश्लेषेणेत्यत आह । **तेनेति** ॥ तेन हकारस्य आकारस्य च सावर्ण्यप्रतिषेधेन हकारेण आकारस्य ग्रहणाभावात्, विश्वपाभिरित्यत्र होढ इति हकारस्य विधीयमान ढत्व पकारादाकारस्य न भवति । आकारप्रश्लेषाभावे तु, तस्य हकारस्य च, सावर्ण्यसत्वात्, हकारेण आकारस्य च ग्रहणादिति, तस्य ढत्व स्यादित्यर्थ । अत्र ढत्वस्यासिद्धत्वात् सयोगान्तलोप एवापादनीय इति नवीना । 'कालसमयवेलासु तुमुन्' इति सूत्रे वेलास्विति लकारादाकारस्य निर्देश नाज्झलावित्यत्र आकारप्रश्लेषे प्रमाणम् ।

(सू ३२४) इति ढत्वं न भवति। अनुनासिकाननुनासिकभेदेन यवला द्विधा। तेनाननुनासिकास्ते द्वयोर्द्वयो. संज्ञा।

## १५। तपरस्तत्कालस्य। (१-१-७०)

त. परो यस्मात्स तात्परश्चोच्चार्यमाणसमकालस्यैव संज्ञा स्यात्। तेन 'अत्' 'इत्' इत्यादय. षण्णा षण्णां संज्ञा। 'ऋत्' इति द्वादशानाम्।

---

अन्यथा तत्र ढत्वस्य सयोगान्तलोपस्य वा आपत्तौ आकारो न श्रूयेतेत्यलम्। ननु ग्रहणकसूत्रे अज्ग्रहणमेव क्रियताम्। अणुदित्सवर्णस्येति किमण्ग्रहणेन। हयवरलाना सवर्णाभावेन तेषु ग्रहणकशास्त्रस्य व्यर्थत्वादित्यत आह। **अनुनासिकेति। तेनेति॥** उक्तद्वैविध्येन सवर्णत्वात् अननुनासिकास्ते यवला प्रत्येक द्वयोर्द्वयोस्सज्ञा। अनुनासिकास्तु यवला अननुनासिकानामपि न सज्ञा। भेदका गुणा इत्याश्रयणात्। वर्णसमाम्नाये अननुनासिकानामेव तेषा पाठाच्च। एवञ्च यवलसग्रहार्थं ग्रहणकसूत्रे अज्ग्रहणमपहाय अण्ग्रहणमिति भाव। ग्रहणकसूत्रे अण् सवर्णाना ग्राहक इति स्थितम्। एव सति अत् इत् उत् इत्यादि तपराणामप्यणा स्वस्वसर्वसवर्णग्राहकत्वे प्राप्ते इदमारभ्यते। **तपरस्तत्कालस्य॥** तपर इत्यावर्तते। प्रथमस्तावत्तपरशब्द त पर यस्मादिति बहुव्रीहि। द्वितीयस्तु तात् पर इति पञ्चमीसमास। ग्रहणकसूत्रादणित्यनुवर्तते। तस्य तपरत्वेन उच्चार्यमाणवर्णस्य काल इव कालो यस्येति बहुव्रीहि। ऊकाल, उष्ट्रमुख इत्यादिवत् समास। एवञ्च अत्, इत्, इत्याद्यात्मक अण् तपरत्वेन उच्चार्यमाण स्वीयकालसदृशकालस्य सज्ञा स्यादित्यर्थ। तत्र, अत्, इत्, उत्, ऋत्, इत्येतेषा तपराणा ह्रस्वाकारादीनामणा कालास्तत्काला तत्तद्ध्रस्वप्रपञ्चा। एत्, ऐत्, ओत्, औत्, इत्येतेषान्तु तपराणामेकारादीना तत्तत्काला तत्तद्दीर्घप्रपञ्चा। तत्र ह्रस्वाकारादीना तपराणा तत्तद्ध्रस्वप्रपञ्चवाचकत्वस्य एकारादीनाञ्च दीर्घाणा तपराणा स्वस्वदीर्घप्रपञ्चवाचकत्वस्य लोकसिद्धत्वात् 'सिद्धेसत्यारम्भो नियमार्थ' इति न्यायेन सूत्रमिद नियमार्थ सपद्यते। अण् तपरश्चेत् तत्कालस्यैव सवर्णस्य ग्राहक। नत्वतत्कालस्येति। एवञ्च अतत्कालनिवृत्यात्मकपरिसङ्ख्यार्थमिद सूत्रम्। वैयाकरणास्तु परिसङ्ख्याविधिमेव नियमविधिरिति व्यवहरन्ति। तादिद सर्वमभिप्रेत्य व्याचष्टे। **तः परो यस्मादित्यादिना॥** नियमविधानस्य फलमाह। **तेनेत्यादिना॥** तेन नियमविधानेन। आदिना ऌत् इत्यादि सङ्ग्रह। अत्, इत्, उत्, ऌत्, एत्, ऐत्, ओत्, औत्, इत्येते अष्टौ तपरा अण स्वस्वसमानकालाना षण्णा षण्णामेव सज्ञा। नत्वतत्कालानामित्यर्थ। **ऋदिति द्वादशानामिति॥** ऋऌवर्णयोरिति सावर्ण्यविधानादिति भाव। नन्वेव ऌदित्यपि द्वादशाना ग्रहण स्यात्। तथाच पुषादिद्युताद्यॢदित इत्यादि विधय ऋदित्स्वपि प्रवर्तेरन्निति चेन्न। ऋदित्यनेन ऌप्रपञ्चस्य ग्रहणेऽपि क्वचित् ऌदिद्ग्रहणबलेन ऌ इत्यनेन ऋप्रपञ्चस्य ग्रहणाभावात्। अन्यथा ऋतो ङीत्यादौ क्वचित् ऋद्ग्रहणस्य पुषादिद्युताद्यॢदित इत्यादौ क्वचित् ऌदिद्ग्रहणस्य च वैयर्थ्यापत्ते। प्रथमातिक्रमणे कारणाभावेन सर्वत्र ऋदिद्ग्रहणस्यैव कर्तु शक्यत्वात्। इदमेवाभिप्रेत्य ग्रहणकसूत्रे ऋदिति द्वादशानामित्येवोक्तम्। ननु ऌदपीति। अत्र च त परो यस्मादिति बहुव्रीहे' अत्,

## १६ । वृद्धिरादैच् । (१-१-१)

आदैच्च वृद्धिसंज्ञः स्यात् ।

## १७ । अदेङ्गुणः । (१-१-२)

अदेङ् च गुणसंज्ञः स्यात् ।

## १८ । भूवादयो धातवः । (१-३-१)

क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्यु ।

---

इत्, उत्, इत्याद्युदाहरणम् । तातपर इति पञ्चमीसमासस्य तु वृद्धिरादैजित्यैकार उदाहरणम् । आत्, ईत्, ऊत्, इत्यादि तु न तपरसूत्रस्योदाहरणम् । आकारादिषु हि तपरसूत्रमपूर्वविधानार्थम्, उत नियमार्थ? नाद्य । तपरसूत्रे ग्रहणकसूत्रादणित्यनुवृत्ते । तत्र अणित्यस्य उक्तरीत्या वर्णसमाम्नायपठितवर्णमात्रपरत्वात् । तपरसूत्रे अण्ग्रहणानुवृत्यभावेऽपि जातिपक्षे आकारादिभि दीर्घै स्वस्वसमानकालिकप्रपञ्चस्य वाच्यताया लोकत एव सिद्धत्वेन तेषु तपरसूत्रप्रवृत्तेर्व्यर्थत्वात् । न द्वितीय । उक्तरीत्या ग्रहणकसूत्रस्य वार्णसमाम्नायिकवर्णमात्रविषयतया आकारादिषु तस्य प्रवृत्यसम्भवेन तपरसूत्रस्य तेष्वतत्कालव्यावृत्तिफलकतन्नियमनार्थत्वानुपपत्ते । सिद्धे सत्यारम्भस्यैव नियमार्थत्वात् । एवञ्च आत्, ईत्, इत्यादि तपरकरणमसदेहार्थमेवेत्यास्ता तावत् । तदेव वृत्त प्रत्याहारप्रपञ्च ग्रहणकशास्त्रप्रपञ्चश्च । इदानी सञ्ज्ञान्तराणि विधास्यन् वृद्धिसञ्ज्ञान्तावदाह । **वृद्धिरादैच्** ॥ यद्यपि पाणिनीयाष्टाध्याय्यामिदमादिम सूत्रम् । तथापि नेदमादावुपन्यस्तम् । अस्य सूत्रस्य तपरकरणे च प्रत्याहारगर्भितत्वेन ग्रहणकशास्त्रनियमार्थतपरसूत्रप्रत्याहारसूत्रप्रवृत्त्युत्तरप्रवृत्तिकतया प्रत्याहारशास्त्रग्रहणकशास्त्रप्रपञ्चनिरूपणात् प्रागुपन्यासानर्हत्वात् । नच सूत्रकृता अयमेव पाठक्रम कुतो नाद्रियत इति वाच्यम् । स्वतन्त्रेच्छस्य महर्षेर्नियन्तुमशक्यत्वात् । आच्च ऐच्चेति समाहारद्वन्द्व । 'द्वन्द्वाच्चुदषहान्तात्' इति समासान्तस्तु न । अत एव निर्देशेन समासान्तविधेरनित्यत्वात् । 'चो कु ' इति पदान्ते विहित कुत्वमपि न । 'अयस्मयादीनि छन्दसि' इति भत्वात् । 'वृद्धिरादैजदेङ्' इति संहितापाठपक्षे चकारस्य 'झलाञ्जशोऽन्त' इति पदान्ते विहितजश्त्वन्तु भवत्येव । उभयसञ्ज्ञान्यपि छन्दसि दृश्यन्ते, इति वचनात् । छन्दोवत् सूत्राणि भवन्तीति छान्दसविधिना सूत्रेष्वपि प्रवृत्ते । नचैवमपि पदत्वात् कुत्व भत्वात् जश्त्वाभावश्च कुतो न स्यादिति वाच्यम् । 'छन्दसि दृष्टानुविधि ' इति वचनादित्यल ॥ आच्च ऐच्चेतीतरेतरयोगद्वन्द्वो वा । तथासति सौत्रमेकवचनम् । आचार्यपारम्पर्योपदेशसिद्धसञ्ज्ञाधिकारात् सञ्ज्ञेति लभ्यते । तदेतदाह । **आदैच्चेत्यादिना । अदेङ्गुणः** ॥ सञ्ज्ञाप्रस्तावात् सञ्ज्ञेति लभ्यते । अच्च एङ् चेति समाहारद्वन्द्व । तदाह । **अदेङ्चेत्यादिना । भूवादयो धातवः** ॥ भूश्च वाश्च भूवौ । आदिश्च आदिश्च आदी । प्रथम आदिशब्द प्रभृतिवचन । द्वितीयस्तु प्रकारवचन । भूवौ आदी येषान्ते भूवादय । भू प्रभृतय वा सदृशाश्च ये, ते धातुसंज्ञका इत्यर्थ । वा धातुसादृश्यञ्च क्रियावाचकत्वेन । तदाह । **क्रियावाचिन इत्यादिना** ॥ क्रियावाचिन. किम् । धातुपाठे या इत्यस्य पाठात् या. पश्यन्तीत्यत्र टाबन्त

## १९। प्राग्रीश्वरान्निपाताः। (१-४-५६)

इत्यधिकृत्य।

## २०। चादयोऽसत्त्वे। (१-४-५७)

अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युः।

## २१। प्रादयः। (१-४-५८)

अद्रव्यार्थाः प्रादयस्तथा।

## २२। उपसर्गाः क्रियायोगे। (१-४-५९)

## २३। गतिश्च। (१-४-६०)

---

यच्छब्दस्य धातुत्वं माभूत्। धातुत्वे हि आतो धातोरित्यालोपः स्यात्। वस्तुतस्तु लक्षणप्रतिपदोक्तपरिभाषया टाबन्तयच्छब्दस्यात्र न ग्रहणप्रसक्तिः। क्रियावाचिन इति तु वाशब्दस्य विकल्पार्थस्य निपातस्य धातुत्त्वनिवृत्यर्थम्। धातुपाठे वा इत्यस्य पाठात् वा गतिगन्धनयोः या प्रापणे इत्यर्थनिर्देशस्याधुनिकत्वात्। क्रियावाचिन इत्युक्तौ तु न दोषः। वार्थस्य विकल्पस्य, वा भविष्यति इति वा अभवदित्येव भूतभविष्यत्कालसम्बन्धाभावेन क्रियात्त्वाभावादिति शब्देन्दुशेखरे स्थितम्। भ्वादयः किम्। वर्जनक्रियावाचिनो हिरुक् इत्यस्य धातुत्वं माभूत्। **प्राग्रीश्वरान्निपाताः**॥ प्रथमस्य चतुर्थपादे 'तत्प्रयोजको हेतुश्च' इत्यनन्तरमिदं सूत्रम्। रीश्वरशब्दः। 'अधिरीश्वरे' इति सूत्रैकदेशस्य अनुकरणम्। अनुकरणत्त्वात् नापशब्दः। अत एव प्रत्यक्षोपजीव्यत्वादिति चिन्तामणिवाक्यस्य प्रत्यक्षेतीति प्रतीकग्रहणं तद्व्याख्याने दृश्यते। इतः प्रभृति अधिरीश्वर इत्येतत्पादीयोपरितनसूत्रे रीश्वरशब्दात् प्राक् निपातसंज्ञकाः प्रत्येतव्या इत्यर्थः। निपातपदमनुवर्तत इति यावत्। रेफविशिष्टग्रहणं किम्। 'ईश्वरे तोसुन् कसुनौ' इति तृतीयाध्यायस्थस्यावधित्वम्माभूत्। यदि तु प्रथमातिक्रमणे कारणाभावात् अधिरीश्वर इत्यस्यैवावधित्वं, तदा सरेफग्रहणं स्पष्टार्थम्। **चादयोऽसत्वे**॥ च आदि येषान्ते चादयः। गणपाठसिद्धाः। निपाता इत्याधिकृतम्। सत्वशब्देन द्रव्यमुच्यते 'द्रव्याऽसुव्यवसायेषु सत्वम्' इत्यमरः। लिङ्गसख्याकारकान्वितं द्रव्यम्। चाद्यर्थास्समुच्चयादयः। यदा चादिभिर्गम्यन्ते तदा लिङ्गाद्यन्विता न भवन्ति। यदा समुच्चयादिशब्दगम्यास्तदा लिङ्गाद्यन्विताः। शब्दस्वाभाव्यात्। न सत्वं असत्वं अद्रव्यं तत्र वाचकतया विद्यमानाश्चादयः निपातसंज्ञकाः स्युरित्यर्थः। तदाह। **अद्रव्यार्था इति**॥ असत्वे किम्। छागः पशुरिति चादौ पठितस्यापि पशुशब्दस्य अत्र द्रव्यवाचित्वान्न निपातत्वम्। इह तु स्यादेव। पुष्टं पशु मन्यते। इह पशु इति सम्यगर्थे। **प्रादयः**॥ असत्वे इत्यनुवर्तते, निपाता इति च। तदाह। **अद्रव्येति**। **तथेति**॥ निपातसंज्ञका इत्यर्थः। **उपसर्गाः**। **गतिश्च**॥ सूत्रद्वयमिदं व्याख्यासौकर्यात् सहोपात्तम्। प्रादय इत्यनुवर्तते। गतिरिति

प्रादय क्रियायोगे उपसर्गसंज्ञा गतिसंज्ञाश्च स्यु । प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उन् अभि प्रति परि उप, एते प्रादयः ।

## २४ । न वेति विभाषा । (१-१-४४)

**निषेधविकल्पयोर्विभाषा संज्ञा स्यात् ।**

---

बहुत्वे एकवचनमार्षम् । तदाह । **प्रादय इत्यादिना । क्रियायोग इति ॥** क्रियाया अन्वये सतीत्यर्थ । निपाता इत्यप्यत्रानुवर्तते । प्राग्रीश्वरात्तदविकारात् । ततश्च प्रादयो निपातसञ्ज्ञका एव सन्तो गत्युपसर्गसञ्ज्ञकाभवन्ति । आकडारादिति च बाध्यते । गत्युपसर्गसञ्ज्ञयोस्तु गतिश्चेति चकारादेव समावेशस्सिध्यति । ततश्च प्रणेयमित्यादौ उपसर्गकार्य 'उपसर्गादसमासेऽपि' इत्यादि सिध्यति । गतिकारकेत्यादि कार्यञ्च निपातस्यानर्थकस्येत्यादि च । अथ प्रादीन् पठति । **प्रपरेत्यादि ॥** परा इत्याकारान्त । अयवातौ 'उपसर्गस्यायतौ' इति निर्दुरोर्लत्वम् । निलयते दुलयते । निसो दुसश्च 'ससजुषोरु' इति रुत्वस्यासिद्धत्वात् न लत्वम् । निरयते दुरयते । एतदर्थमेव निस् दुसोर्निर् दुरोश्च पृथक्पाठ । **नवेति विभाषा ॥** मेध्य पशुरनड्वान्विभाषित इत्यादि याज्ञिकप्रयोगे विभाषाशब्द केवलविकल्पे दृष्ट । इहतु शास्त्रे निषेधो विकल्पश्चेति द्वय मिळित विभाषाशब्दार्थ इति बोधयितुमिदमारभ्यते । इति शब्दाभावे स्व रूप शब्दस्येति न वा शब्दयो स्वरूपपरत्वान्नवाशब्दयोर्विभाषासञ्ज्ञेत्यर्थस्स्यात् । ततश्च "विभाषाश्वे" इत्यादौ न वा शब्दावादेशौ स्याता । इति करणे तु नाय दोष । इतिर्हि प्रत्येक सम्बध्यते । ततश्च नेति शब्देन योऽर्थो गम्यते निषेध, वेति शब्देन योऽर्थो गम्यते विकल्प, तदुभयस्य मिळितस्य विभाषा सञ्ज्ञा स्यादित्यर्थः फलति । एवञ्च नवाशब्दार्थयोरेव सञ्ज्ञित्व लभ्यते, न तु नवाशब्दस्वरूपयोरिति नोक्तदोष । तदाह । **निषेधविकल्पयोरित्यादि ॥** उभयत्र विभाषार्थमिद सूत्रम् । तथाहि । प्राप्तविभाषा अप्राप्तविभाषा उभयत्र विभाषेति त्रिविधा विभाषा । प्राप्तविभाषा यथा । विभाषा जसीति वर्णाश्रमेतरे वर्णाश्रमेतरा इत्यत्र द्वन्द्वे चेति नित्यतया सर्वनामसञ्ज्ञानिषेधे प्राप्ते विभाषेय । अप्राप्तविभाषा यथा । तीयस्य ङित्सु विभाषेति । द्वितीयस्मै द्वितीयायेत्यादौ तीयप्रत्ययस्य सर्वादिगणे पाठाभावात् अप्राप्ताया सर्वनामसञ्ज्ञाया विभाषेयम् । उभयत्र विभाषा यथा । विभाषा श्वेरिति श्वयतेर्लिटि यङि च सम्प्रसारण विभाषेयम् । तत्र लिटि शुशाव, शिश्वाय, शुशुवतु, शिश्वियतु, इत्याद्युदाहरणम् । यङि तु शोशूयते इति । अत्र यङशे अप्राप्तविभाषैवेयम् । लिटि तु द्विवचनबहुवचनेष्वपित्सु "वचि स्वपि यजादीना किति" इति नित्यतया सम्प्रसारण प्राप्तम् । पित्सु त्वेकवचनेषु सम्प्रसारण न प्राप्तमेव । 'असयोगाल्लिट् कित्" इति कित्वस्य अपित्स्वेव प्रवृत्ते । एवञ्च प्राप्तेऽप्राप्तेच आरम्भात् "विभाषा श्वे" इत्युभयत्र विभाषेति स्थिति । तत्र यदि 'नवेति विभाषा' इति सूत्रन्नारभ्येत। तर्हि 'अनड्वान्विभाषित' इत्यादि याज्ञिकप्रयोग इव विभाषा श्वेरित्यत्रापि केवलविकल्प प्रतीयेत । भाव अभावश्चेति द्वयन्तावद्विकल्प । ततश्च विभाषाश्रुतौ प्रवृत्तिस्तदभावश्चेति द्वयमपि विधेयमिति

## २५ । स्वं रूपं शब्दस्याशब्दसंज्ञा । (१-१-६८)

**शब्दस्य स्वं रूपं संज्ञि शब्दशास्त्रे या सज्ञा तां विना ।**

लभ्यते । तत्र यदि "विभाषाश्वे" इति विकल्पो विधिमुख लिटि श्वयतेस्सप्रसाण भवति न भवतीति पित्स्वेव विकल्पस्य प्रवृत्ति स्यात् । तत्र हि सम्प्रसारणस्य । वाचिस्वपीति किति विहितस्य अप्राप्तत्वेन प्रथम भवनाशो विधेय । तस्य पाक्षिकत्वाय न भवतीत्यपि विधेयम् । कित्सु तु प्रवृत्तिर्नस्यात् । तेषु हि वाचिस्वपि यजादीना कितीति प्राप्तत्वात् । प्रथम भवनाशो न विधेय । न भवतीत्यश एव विधेय । एवञ्च उभयाशविधेयत्वालाभात्तत्र विकल्पविधिरय न प्रवर्तेत । तत्र नित्यमेव सप्रसारण स्यात् । यदितु विकल्पो निषेधमुख लिटि श्वयतेस्सम्प्रसारणन्नभवतीति, तर्हि कित्स्वेव प्रवृत्तिस्स्यात् । तत्र हि वचिस्वपीति प्राप्तत्वान्नभवतीति प्रथम विधेयम् । अभवनस्य पाक्षिकत्वलाभाय भवतीत्यपि विधेयम् । पित्सु तु प्रवृत्तिर्नस्यात् । तत्र सम्प्रसारणस्य अप्राप्ततया न भवतीत्यशस्य प्रथम विध्यनर्हत्वात् । न च पित्सु विधिमुख कित्सु निषेधमुख इत्युभयथापि प्रवृत्तिरिति वाच्यम् । सकृच्छ्रुतस्य विभाषाशब्दस्य क्वचिद्विधिमुखविकल्पबोधने क्वचिन्निषेधमुखविकल्पबोधने च असामर्थ्यात् । आवृत्त्या तद्बोधनेतु स एव दोष । नवेतिविभाषेत्यारम्भेतु श्रुतक्रमानुरोधेन बोधात् । नेत्यशेन कित्सु पूर्वनिषेध प्रवर्तते । तत किदकिद्रूपे सर्वस्मिन् लिटि निस्सम्प्रसारणतया ऐकरूप्य प्रापिते सति भवति नभवतीत्येकरूपेण विधिमुख एव विकल्प प्रवर्तते । तदेवमुभयत्र विभाषार्थमिद सूत्रम् । प्राप्तविभाषायान्तु नास्योपयोग । तत्र भवनाशस्य प्राप्तत्वेन विध्यनर्हत्वात् । अप्राप्तविभाषायामपि न तस्योपयोग । तत्र अभवनाशस्य सिद्धत्वेन विध्यनर्हत्वात् । नचैवमपि 'उणादयोबहुळम् । हृक्रोरन्यतरस्याम् । छन्दस्युभयथा । अनुपसर्गाद्वा' इत्यादि विधिषु विभाषाशब्दाभावात् । केवलविकल्पविधौ वैरूप्य दुर्वारमिति वाच्यम् । विभाषाशब्दस्यात्रसूत्रे विकल्पवाचकशब्दोपलक्षणत्वात् । एवञ्च लोके ये विकल्पपर्यायाश्शब्दा ते सर्वे अस्मिन् शास्त्रे निषेधविकल्पयो प्रत्यायका इति सूत्रार्थपर्यवसान बोध्यम् । भाष्येतु विभाषादिशब्दाना लोकवदेव केवलविकल्पपरत्वेऽपि लक्ष्यानुरोधेनैव क्वचिद्विधिमुखेन क्वचिन्निषेधमुखेन विकल्पस्य प्रवृत्त्युपपत्ते एतत्सूत्र प्रत्याख्यातमित्यल बहुना । 'अग्नेर्ढक् । वाय्वृतुपित्रुषसो यत् । राज्ञो यत' इत्यादौ लौकिकव्युत्पत्त्या उपस्थिताना वह्निवातादीना अर्थाना ढगादिप्रत्ययै पौर्वापर्यासम्भवात् प्रातिपदिकादित्यनेनान्वयासम्भवाच्च तत्तदर्थकपर्यायशब्दाना ग्रहणापत्तौ तन्नियमार्थमिद सूत्रमारभ्यते । **स्वं रूपम्** ॥ अग्नेर्ढगित्यादौ अग्न्यादिशब्दस्य यत् स्वरूप श्रुत तदेव अग्न्यादिशब्दै प्रत्येतव्यम् । नतु तदन्य तत्तत्पर्यायोऽपि । शब्दशास्त्रे सङ्केतिता वृद्धिगुणादिसज्ञा शब्दसज्ञा तत्र नायन्नियम इत्यर्थ । तदाह । **शब्दस्य स्वं रूपं संज्ञीति** ॥ बोध्यमित्यर्थ. । न च वृद्धि गुण इत्यादि सज्ञाविधिबलादेव तत्र तदर्थग्रहण भविष्यतीति किं शब्दसंज्ञेत्यनेनेति वाच्यम् । 'उपसर्गे घो कि' इत्यत्र घु शब्द इति घु धातु निवृत्त्यर्थत्वात् 'दाधाघ्वदाप्' इति सज्ञाकरणस्य 'घुमास्थागापाजहातिसा हलि' इत्यादौ आवश्यकतया सज्ञाकरणस्य

## २६ । येन विधिस्तदन्तस्य । (१-१-७२)

विशेषणं तदन्तस्य संज्ञा स्यात् स्वस्य च रूपस्य । समासप्रत्ययविधौ प्रतिषेधः । उगिद्वर्णग्रहणवर्जम् ।

## २७ । विरामोऽवसानम् । (१-४-११०)

वर्णानामभावोऽवसानसंज्ञस्स्यात् ।

---

सामर्थ्योपक्षयादित्यन्यत्र विस्तर । इद सूत्र भाष्ये प्रत्याख्यातम् । यत् शब्दस्य रूप उपादाय यो विधिरारभ्यते स तस्य तदन्तस्य च भवतीत्येतद्वक्तुमाह । **येन विधि** ॥ विधीयत इति विधि 'उपसर्गे घो कि' इति दधाते भावे किप्रत्यय । येनेति करणे तृतीया । शास्त्रकृत् विधाने कर्ता । धातोरित्यविकृत्य एरजिति इकारेण विशेषणेन धातोरच्प्रत्यय विधत्ते पाणिनि । करण च व्यापारवत् । एरजित्यत्र विशेषणस्येकारस्य पाणिनिकर्तृकविधानक्रियाया करणस्य इतरव्यावर्तनमेव व्यापार । ततश्च विशेषणमेवात्र येनेति तृतीयान्तेनोच्यते । स्व रूपामेत्यत स्वमित्यनुवर्तते । षष्ठ्यन्ततया च विपरिणम्यते । एव च विशेषणसमर्पकश्शब्द तदन्तस्य स्वस्य च प्रत्यायक इति फलति। तदाह । **विशेषण तदन्तस्य संज्ञा स्यात् स्वस्य चेति** ॥ विशेषणसमर्पकश्शब्दस्तदन्तस्य शब्दस्य विशेषणसमर्पकशब्दस्य च बोधकस्स्यादिति यावत् । ततश्च एराजित्यत्र इकारान्ताद्धातोरच् प्रत्ययस्स्यात् इकाररूपाद्धातोश्चेति फलति । यथा । चय , अय । केचित्तु करण कर्तृपरतन्त्रमिति तृतीयया पारतन्त्र्य लक्ष्यते, तच्च शब्दाना विशेषणत्वेनेति विशेषणपरत्व यच्छब्दस्य लभ्यत इत्याहु । तत्तु शब्देन्दुशेखरे दूषितम् । **समासेति** ॥ वार्तिकमेतत् । समासविधौ प्रत्ययविधौ च तदन्तविधे प्रतिषेधो वाच्य इत्यर्थ । तेन कृष्ण परमश्रित इत्यत्र द्वितीयाश्रितेति समासो न भवति । सूत्रनडस्य गोत्रापत्य सौत्रनाडि अत इञ्, अनुशतिकादीना चेत्युभयपदवृद्धि । अत्रनडादिभ्य फक्, इति न भवति । नन्वेव सति पचन्तमतिक्रान्ता अतिपचन्तीत्यत्र उगितश्चेति उगिदन्तात्प्रातिपदिकात् विहितो ङीप् न स्यात् । प्रत्ययविधौ तदन्तविधे प्रतिषेधात् । तथा दाक्षिरित्यत्र अत इञ् इति इञ् न स्यात् । अस्यापत्य इरित्यत्रैव इञ् स्यादित्यत आह । **उगिदिति** ॥ इदमपि वार्तिकम् । द्वितीयाया चेति वर्जयतेर्णमुल् । उगिद्ग्रहण वर्णग्रहण च वर्जयित्वा समासप्रत्ययविधावित्युक्त प्रतिषेधो भवति । उगिद्वर्णग्रहणे तु येन विधिरिति तदन्तविधिरस्त्येव ततश्च अतिपचन्तीत्यत्र उगिदन्तप्रातिपदिकान्तात् उगितश्चेति ङीप् । दाक्षिरित्यत्र अवर्णान्तादिञ्च सिद्ध्यति । **विरामोऽवसानम्** ॥ विरम्यते अस्मिन्निति विराम सामीपिकेऽधिकरणे घञ् । विरमण क्रियाया अभाव , स च शब्दशास्त्रप्रस्तावात् वर्णानामुच्चारणाभावात्मक इति लभ्यते । तथाच यस्मिन् वर्णे उच्चारिते सति अव्यवहितोत्तरकाले वर्णान्तराणामुच्चारणाभाव स अन्त्यवर्ण अवसानसञ्ज्ञक इत्यर्थ. फलति । तदभिप्रेत्य व्याचष्टे । **वर्णानामित्यादिना** ॥ यस्मिन्नुच्चारिते सति वर्णान्तराणा उच्चारणाभाव स. अन्त्यवर्ण अवसानसञ्ज्ञक. इत्यध्याहारेण विवरण

## २८। परः सन्निकर्षः संहिता। (१-४-१०९)

वर्णानामतिशयित. सन्निधि· संहितासंज्ञ· स्यात्।

## २९। सुप्तिङन्तं पदम्। (१-४-१४)

सुबन्तं तिङन्तं च पदसंज्ञं स्यात्।

## ३०। हलोऽनन्तराः संयोगः। (१-१-७)

अज्भिरव्यवहिता हल संयोगसंज्ञा. स्यु।

## ३१। ह्रस्वं लघु। (१-४-१०)

## ३२। संयोगे गुरु। (१-४-११)

संयोगे परे ह्रस्वं गुरुसंज्ञं स्यात्।

---

योज्यम्। यद्वा वर्णानामुच्चारणाभाव विराम। भावे घञ्। स च किंचिद्वर्णोच्चारणोत्तरकालिक एव गृह्यते। व्याख्यानात्। अस्मिन् पक्षे किंचिद्वर्णोच्चारणोत्तर वर्णान्तराणामुच्चारणाभाव अवसानमिति विवरणयाजना। तत्र प्रथमपक्षे खरवसानयोरित्यत्र खरि परत रेफस्य विसर्ग। अवसाने तु रेफे स्थानिनीति योज्यम्। खरवसानयोरित्येकापि सप्तमी विषयभेदाद्भिद्यते। द्वितीयपक्षे तु अभावस्यापि बुद्धिकृत परत्व बोध्यम्। **परस्सन्निकर्षः**॥ पर अतिशयित "दूरानात्मोत्तमा परा" इत्यमर। सन्निकर्षस्सामीप्य अर्धमात्राधिककालव्यवधानाभाव। अर्धमात्रकालव्यवधानस्य अवर्जनीयत्वात्। तदेतदभिप्रेत्याह। **अतिशयित इत्यादिना**। **सुप्तिङन्तं पदम्**॥ स्वौजसमौडिति सूत्रे सु इत्यारभ्य सुप पकारेण प्रत्याहार। नतु सप्तमीबहुवचनस्यैवात्र ग्रहणम्। व्याख्यानात्। सुप्च तिङ् च सुप्तिङौ तौ अन्ते यस्य तत् सप्तिडन्त शब्दरूपमिति शब्दशास्त्रप्रस्तावाल्लभ्यते। अन्तशब्दश्च प्रत्येक सबध्यते। तदाह। **सुबन्तमित्यादिना**। **हलोऽनन्तरास्संयोगः**॥ अन्तरशब्दोऽत्र व्यवधाने वर्तते 'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये' इत्यमर। व्यवधानञ्च विजातीयेनैव। अविद्यमान अन्तर व्यवधान येषामिति विग्रह। नञोऽस्त्यर्थानामिति विद्यमानपदस्य लोप। तदाह। **अज्भिरित्यादिना**॥ तत्र हलश्च हलौ च हल इत्येकशेष। तेन द्वयोरपि सयोगसज्ञा लभ्यते। ततश्च शिक्षेत्यत्र 'गुरोश्च हल' इत्यप्रत्ययस्सिध्येत। अत्र च समुदायस्यैव सयोगसज्ञा। महासज्ञाकरणात्, व्याख्यानाच्च। नतु प्रत्येकम्। तथासति सुदृषत्प्रासाद इत्यत्र पकारसन्निधौ तकारस्य सयोगत्वापत्तौ सयोगान्तलोपापत्ते। यत्र तु बहवो हल श्लिष्टा तत्रापि द्वयोर्द्वयोस्सयोगसज्ञा नतु बहूनामेवेति शब्देन्दुशेखरे स्पष्ट। **ह्रस्वं लघु**॥ ह्रस्व लघुसज्ञ स्यादित्यर्थस्य स्पष्टत्वात् न व्याख्यातम्। अत एव निर्देशात् ह्रस्वशब्दो नपुसकलिङ्गोऽपि। **संयोगे गुरु**॥ ह्रस्वमित्यनुवर्तते। तदाह। **संयोगे**

## ३३ । दीर्घं च । (१-४-१२)

दीर्घं च गुरुसंज्ञं स्यात् ।

। इति सञ्ज्ञाप्रकरणम् ।

---

## ॥ अथ परिभाषाप्रकरणम् ॥

## ३४ । इको गुणवृद्धी । (१-१-३)

गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्र 'इक' इति षष्ठ्यन्तं पदमुपतिष्ठते ।

## ३५ । अचश्च । (१-२-२८)

---

**पर इत्यादिना ॥ दीर्घञ्च ॥** सयोग इति नानुवर्तते । दीर्घमपि गुरुसञ्ज्ञकमित्यर्थ । **इति सञ्ज्ञाप्रकरणमिति ॥** सन्धिकार्योपयोगिप्रथमाध्यायस्थसञ्ज्ञानिरूपण समाप्तमित्यर्थ । **इको गुणवृद्धी ॥** इक इति षष्ठ्यन्तशब्द स्वरूपपर नपुसकलिङ्ग प्रथमैकवचनान्त । सोर्लुका लुप्तत्वादत्वसन्तस्येति दीर्घो न । इकस् शब्द इत्यर्थ । उपतिष्ठत इति शेष 'वृद्धिरादैच्' 'अदेङ्गुण' इत्यतो वृद्धिरिति गुण इति चानुवर्तते । इति शब्दोऽध्याहार्य । यत्र विधीयते तत्रेत्यप्यध्याहार्यम् । गुणो वृद्धिरित्युच्चार्य यत्र गुणवृद्धी विधीयेते तत्र इक इति षष्ठ्यन्त पदमुपतिष्ठत इति योजना । तदाह । **गुण वृद्धिशब्दाभ्यामित्यादिना । उपतिष्ठत इति ॥** सङ्गत भवतीत्यर्थ । उपाद्देवपूजासङ्गतिकरणेत्यात्मनेपदम् । सोऽय पदोपस्थितिपक्षो भाष्यादौ सिद्धान्तित । 'सार्वधातुकार्धधातुकयो ' 'मिदेर्गुण', इत्याद्युदाहरणम् । इक इत्यस्यान्वयप्रकारस्तु तत्र तत्र स्पष्टीभविष्यति । यत्र विधीयेते इत्युक्त्या वृद्धिर्यस्याचामित्याद्यनुवादे इक इति नोपतिष्ठते । अनुवादे परिभाषाणामनुपस्थिते ,* 'त्यदादीनाम , इत्यादावपि नेदमुपतिष्ठते । तत्र गुणवृद्धिशब्दयोरश्रवणात् । **अचश्च ॥** अच इत्यपि षष्ठ्यन्तशब्द स्वरूपपर । पूर्वसूत्रे इक इतिवत् । ऊकालोजित्यत ह्रस्वदीर्घप्लुत इत्यनुवर्तते ।

---

*अत्रेद तत्वम् । अनुवादे परिभाषा नोपतिष्ठते इत्यत्रानुवादपद अनूद्यमानविशेषणपरम् । एवञ्च 'अनूद्यमानविशेषणेषु परिभाषा नोपतिष्ठते' इति, निष्कर्ष । 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इति वृद्धसञ्ज्ञाविधायकसूत्रे वृद्धिशब्दस्य अनूद्यमानविशेषणत्वेनोपात्तत्वात् तत्र 'इको गुणवृद्धी' इति परिभाषाया अनुपस्थानात् शालीय , मालीय , इत्यादि लक्ष्य सिद्ध्यति । यदि तत्र इक्परिभाषा उपतिष्ठेत, तदा औपगवीय इत्याद्येव सिद्ध्येत् । तत्रैव औकाररूपवृद्धे उकाररूपेक्स्थानिकत्वात् । नतु शालीय मालीय इत्यादौ । तत्र आकाररूपाया वृद्धेरतथात्वात् । तथैव 'अतो गुणे' इत्यनुवाद्यविशेषणस्थलेपीक्परिभाषोपस्थितौ, एधे, पचे, यजे, इत्यादावेव पररूप स्यात् । अत्र एकाररूपगुणानामिक्स्थानिकत्वात् । नतु पचतीत्यादौ । तत्र अकाररूपगुणस्य इक्स्थानिकत्वाभावादित्यपि बोध्यम् ।

ह्रस्वदीर्घप्लुतशब्दैर्यत्राज्विधीयते तत्र 'अच.' इति षष्ठ्यन्तं पदमुपतिष्ठते।

## ३६। आद्यन्तौ टकितौ। (१-१-४६)

टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्त ।

## ३७। मिदचोऽन्त्यात्परः। (१-१-४७)

'अच' इति षष्ठ्यन्तम्। अचा मद्ध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्ता-वयवो मित्स्यात्।

---

इति यत्र विधीयत इत्यध्याहार्यम्। फलितमाह। **ह्रस्वेत्यादिना**॥ 'दिव उत्' इत्यादौ तु नेद प्रवर्तते। ह्रस्वादिशब्दाना अश्रवणात् 'ह्रस्वो नपुसके प्रातिपदिकस्य' इत्याद्युदाहरण। श्रीप। नेह सुपात् ब्राह्मणकुलम्। **आद्यन्तौ टकितौ**॥ आदिश्च अन्तश्च आद्यन्तौ टश्च क् च टकौ। टकारादकार उच्चारणार्थ । टकौ इतौ ययोस्तौ टकितौ । अन्तशब्द प्रत्येक सम्बद्ध्यते । टित्कितौ आद्यन्तावयवौ स्त । कस्येत्याकाक्षाया यस्य तौ विहितौ तयोरित्यर्थाल्लभ्यते। तदाह। **टित्कितावित्यादिना**॥ क्रमादिति यथासख्यसूत्रलभ्यम्। टित् आद्यवयव कित् अन्तावयव इत्यर्थ । नचैव सति मिळितयोरेकत्रान्वयाभावात् कथमिह द्वन्द्व इति वाच्यम्। प्रथमतस्समुदायरूपेण परस्परयुगळयोरन्वयबोधमादाय द्वन्द्वप्रवृत्तौ सत्या यथासङ्ख्यसूत्रपर्यालोचनया पुन प्रत्येकान्वयोपपत्ते। एचोऽयवायाव इत्यादावप्येषैव गति । लोके त्वेवजातीयकप्रयोग असाधुरेवेति भाष्यादिषु स्पष्टम्। अतैव यथासख्यसूत्रोपन्यासो युक्त । 'आर्धधातुकस्येड्वलादे' भविता। 'ङ्णो कुक् टुक् शरि' प्राङ्क्षष्ठ इत्याद्युदाहरणम्। पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति षष्ठी स्थाने योगेत्यस्यानन्तरस्यैवायमपवाद । 'प्रत्यय परश्च' इत्यनेन तु परत्वादिद बाध्यते। तेन चरेष्ट, गापोष्टक्, इत्यादय परा एव भवन्ति । **मिदचोन्त्यात्परः**॥ मकार इत् यस्य स मित् अन्त्यादच परो भवतीत्यर्थे 'शे मुचादीनाम्' इत्यादाविदन्नप्रवर्तेत । तत्रान्तस्याचोऽभावात्। अत आह। **अच इति षष्ठ्यन्तमिति**॥ यतश्च निर्द्धारणमित्यनेनेति शेष । अच इत्येकत्वमविवक्षितम्। तदाह। **अचाम्मद्ध्य इत्यादिना**। **अन्तावयव इति**॥ एतच्च आद्यन्तावित्यत अन्तग्रहणानुवृत्त्या लभ्यते। आद्यन्तशब्दैकदेशस्यान्तशब्दस्य तन्मात्रे स्वरितत्वप्रतिज्ञाबलेनानुवृत्तिसम्भवात्। आदिग्रहणमनुवृत्य परादित्वाभ्युपगमे तु वारीणीति बहुवचने 'सर्वनामस्थाने चासम्बुद्धौ' इति नान्ताङ्गस्य विहितो दीर्घो न सिद्ध्येत्। अभक्तत्वे तु वहलिह इत्यत्र 'वहाभ्रे लिह' इति खशि अरुर्द्विषदिति मुमि तस्य 'मोनुस्वार' इति मान्तस्य पदस्य विहितोऽनुस्वारो न स्यात्। वस्तुतस्तु, यस्य समुदायस्य मिद्विहित तस्याचाम्मद्ध्ये योऽन्त्यस्तस्मात्पर तस्य समुदायस्य अन्तावयव इति व्याख्येयम्। अत एव समुदायभक्तो मिदिति भाष्य सङ्गच्छते । समासाश्रय-

## ३८ । षष्ठी स्थानेयोगा । (१-१-४९)

अनिर्धारितसंबन्धविशेषा षष्ठी स्थानेयोगा बोद्धव्या । स्थानञ्च प्रसङ्ग ।

## ३९ । स्थानेऽन्तरतमः । (१-१-५०)

---

विधौ मूलकारश्च वक्ष्यति । अङ्गस्य नुम्विधानात् तद्भक्तो हि नुम्, इति । **षष्ठी स्थानेयोगा॥** स्थान प्रसङ्ग इति वक्ष्यति । तस्मिन् वाचकतया योगो यस्यास्सा स्थानेयोगा, निपातनात् सप्तम्या अलुक् । स्थानेन योगो यस्या इति विग्रह । निपातनादेत्वम् । इको यणचीत्यादौ षष्ठी स्थानरूपसम्बन्धार्थिकेत्यर्थ । लोके तावदेकशत षष्ठ्यर्था आर्या यौना मौखा स्रौवाश्च । शब्दस्य शब्देन त्रय एव सम्बन्धा । आनन्तर्य सामीप्य प्रसङ्गश्चेति । तत्रान्यतमार्थनिर्द्धारणार्थमिद सूत्रमिति भाष्यम् । ततश्च इको यणचीत्यादौ इक इति षष्ठ्या स्थानमुच्यते । तस्मिन् प्रकृत्यर्थ इक् निरूपकतयाऽन्वेति । अचि परत इक प्रसङ्गे यण् स्यादिति विवरणवाक्ये त्वस्मिन् इक इति षष्ठी निरूपकतायामिति न पुनरुक्तिश्शक्या । यथा देवदत्तस्यावयव पाणिरिति । 'ऊदुपधाया गोह' इत्यत्र तु गोह इति षष्ठी न स्थानार्थिका । उपधापदसमभिव्याहारेणावयवषष्ठीत्वनिर्द्धारणात् । परिभाषाणाञ्च अनियमे नियमनार्थमेव प्रवृत्ते । तदेतदाह । **अनिर्द्धारितेत्यादिना ॥** अनिर्द्धारित सम्बन्धविशेष यस्या इति विग्रह । तदेवमुदाहृतप्रकृतभाष्यरीत्या इकोयणचीत्यादौ षष्ठी स्थानरूपसम्बन्धविशेषार्थिकेति स्थितम् । मतुप्सूत्रभाष्ये तु अनन्तरादयो न षष्ठ्यर्था इति स्थितम् । एव सति स्थाने इति सप्तम्यन्तपदेन योगो यस्या इति विग्रहे स्थाने इति सप्तम्यन्तस्यानुकरणम् । षष्ठीश्रुतौ स्थाने इति सप्तम्यन्त पदमुपतिष्ठत इति फलति । स्थानेनार्थेन योगो यस्या इति त्रितीयान्तविग्रहेतु अध्याहृतस्थानपदार्थनिरूपितसम्बन्धार्थिकेत्यर्थ । अस्तेर्भूर्भवतीति सन्देहस्थाने अनन्तरे समीपे इत्यादिप्रकृतसूत्रभाष्यस्य तु अस्तेरनन्तरे इत्यध्याहृतानन्तरादिपदार्थनिरूपितसम्बन्धा षष्ठीत्येवार्थ । अनन्तरादीना षष्ठ्यर्थत्वन्तु नास्त्येवेति प्रौढमनोरमाया हलन्त्यमिति सूत्रे स्थितम् । तद्व्याख्याने च शब्दरत्ने शब्देन्दुशेखरे च बहुधा प्रपञ्चितम् । अनिर्द्धारितेति किम् । ऊदुपधाया इत्यत्र गोह इति षष्ठ्या स्थानार्थकत्वम्माभूत् । सतितु तत्रापि स्थानार्थकत्वे गोहोऽन्त्यस्य उपधामात्रस्य च ऊत् स्यात् । ननु स्थानशब्द आधारवाची लोके प्रसिद्ध । यथा शिवस्थान कैलास विष्णुस्थान वैकुण्ठ इत्यादौ । एवञ्च इको यणचीत्यादौ षष्ठ्या स्थानार्थकत्वे प्रकृत्यर्थस्य तत्र निरूपकत्वेन अभेदेन वा अन्वये सति इकोऽधिकरणे यण् स्यात् इति इगधिकरणको यण् स्यादिति वा अर्थस्स्यात् । तत इको निवृत्तिर्नस्यादित्यत आह । **स्थानञ्च प्रसङ्ग इति ॥** क्वचिदाभिचारेष्टौ दर्भाणा स्थाने शरै प्रस्तरितव्यमित्यत्र स्थानशब्दस्य प्रसङ्गे दर्शनादिति भाव । एवञ्च तत्र यथा शरैर्दर्भानिवर्तन्ते तद्वदिकोयणचीत्यादावपि यणादिभिरिगादयो निवर्तन्ते । तत्र च य प्रसक्तो निवर्तते स स्थानीति व्यवह्रियते । यो निवर्तयति स आदेश इति । **स्थानेऽन्तरतमः ॥** स्थान प्रसङ्ग इत्युक्त अन्तरशब्दोऽत्र सदृशपर्याय अतिशयितोऽन्तर अन्तरतम

प्रसङ्गे सति सदृशतम आदेशः स्यात्। 'यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः' (प १४)।

## ४०। तस्मिन्निति निर्दिष्टे पूर्वस्य। (१-१-६६)

तदाह। **प्रसङ्गे सतीत्यादिना**॥ एकस्य स्थानिनः अनेकादेशप्रसङ्गे सति यः स्थानार्थगुणप्रमाणतः स्थानिना सदृशतमः स एवादेशो भवतीत्यर्थः। अत्र स्थानशब्देन ताल्वादिस्थानं विवक्षितम्। गुणशब्देन प्रयत्नः। प्रमाणशब्देन एकद्विमात्रादिपरिमाणम्। तत्र स्थानतो यथा। दध्यत्र। तालुस्थानकस्य इकारस्य तालुस्थानको यकारः। अर्थतो यथा। तृज्वत् क्रोष्टुरिति क्रोष्टुशब्दस्य उकारान्तस्य तृजन्त आदेशो भवन् अर्थसाम्यात् क्रोष्टृशब्द एव तृजन्त आदेशो भवति। गुणतो यथा वाग्घरिः। अत्र हकारः स्थानी। घोषनादसंवारमहाप्राणप्रयत्नवान्। तस्य गकारसवर्णो भवन् चतुर्थो घकारो भवति। तस्य हकारेण स्थानिना घोषनादसंवारमहाप्राणप्रयत्नसाम्यात्। ककारस्तु न भवति। तस्य श्वासाघोषविवाराल्पप्राणप्रयत्नकत्वात्। तथा खकारोऽपि द्वितीयो न भवति। तस्य महाप्राणप्रयत्नसाम्येऽपि श्वासाघोषविवारप्रयत्नभेदात्। तथा तृतीयोऽपि गकारो न भवति। तस्य घोषनादसंवारप्रयत्नसाम्येऽपि अल्पप्राणप्रयत्नभेदात्। अत एव ङकारो न भवति। नन्वत्र हकारस्य खकारो द्वितीयः कुतो न स्यात्। तस्य स्थानिना हकारेण श्वासाघोषविवारप्रयत्नभेदे सत्यपि महाप्राणप्रयत्नसाम्यसत्त्वात्। तथा तृतीयो वा गकारः कुतो न स्यात्। तस्य स्थानिना हकारेण अल्पप्राणप्रयत्नभेदेऽपि घोषनादसंवारप्रयत्नसाम्यसत्त्वात्। अत एव ङकारो वा कुतो न स्यादिति चेन्न। तमप्ग्रहणेन उक्तातिप्रसङ्गनिरासात्। अतिशयितो ह्यन्तरः, अन्तरतमः, अतिशयितश्च प्रयत्नतस्सादृश्यं हकारेण घकारस्यैव। उभयोरपि घोषनादसंवारमहाप्राणात्मकप्रयत्नचतुष्टयसाम्येन सादृश्यातिशयसत्त्वात्। खकारस्य महाप्राणप्रयत्नसाम्येऽपि घोषनादसंवारप्रयत्नविरहात्। गङयोः घोषनादसंवारप्रयत्नसाम्येऽपि महाप्राणप्रयत्नविरहात्। प्रमाणतो यथा। 'अदसोऽसेर्दादु दो मः' इति ह्रस्वस्य उकारः, दीर्घस्य ऊकारः। नन्वेवमपि चेतास्तोतेत्यत्र इकारस्य उकारस्य च सार्वधातुकार्धधातुकयोरिति गुणो भवन् प्रमाणत आन्तर्यवानकारः कुतो न स्यादित्यत आह। **यत्रेति**॥ तेन इकारस्य एकारः। उकारस्य ओकारश्च गुणो भवति। स्थानसाम्यात्। नत्वकारः। स्थानभेदात्। नच इकारेण एकारस्य उकारेण ओकारस्य च कथं स्थानसाम्यम्। एकारस्य ओकारस्य च कण्ठस्थानाधिक्यादिति वाच्यम्। यावत्स्थानसाम्यस्य सावर्ण्यप्रयोजकत्वेऽपि आन्तरतम्यपरीक्षायां कथञ्चित् स्थानसाम्यस्यैव प्रयोजकत्वात्। अत्र सूत्रे पूर्वसूत्रात् स्थानेग्रहणमनुवर्तते। एकदेशे स्वरितत्वप्रतिज्ञाबलात्। तृतीयान्तञ्च विपरिणम्यते। अनुवर्त्यमानश्चायं स्थानशब्दः पूर्वसूत्रे प्रसङ्गपरोऽप्यत्र ताल्वाद्यन्यतमस्थानपरः। शब्दाधिकाराश्रयणात्। अन्तरतम इत्यपि तेन सम्बध्यते। ततश्च स्थानेनान्तरतम इति वाक्यान्तरं सम्पद्यते। सति सम्भवे ताल्वादिस्थानत एवान्तरतमो भवतीत्यर्थः। ततश्च यत्रानेकविधमान्तर्यं तत्र स्थानत एवान्तर्यं बलीय इति भवति। **तस्मिन्निति निर्दिष्टे**॥ इको यणचीत्यत्र अचि इकः यण्

सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम् ।

## ४१ । तस्मादित्युत्तरस्य । (१-१-६७)

**पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम् ।**

---

स्यादित्यवगतम् । तत्र अचो वर्णान्तराविकरणत्व न सम्भवतीति सति सप्तम्याश्रयणीया । अचि सति इको यण् स्यादिति । तत्र व्यवहिते अव्यवहिते च इको यण् प्राप्त । ततश्च समिधमित्यत्र धकारस्य व्यवहिते अकारे सत्यपि मकारादिकारस्य यण् स्यात् । तथा अचि सति पूर्वस्य परस्य वा इको यण् प्राप्त । ततश्च दध्युदकमित्यत्र इकारे अचि सति उकारस्य परस्यापि इको यण स्यात् । तत्र अव्यवहित एव अचि भवति पूर्वस्यैव भवति । न परस्येत्येतदर्थमिदमारभ्यते । तस्मिन्निति न तच्छब्दस्स्वरूपपर । तथासति "तस्मिन्नणि च युष्माकास्माकौ" इत्यादावेव प्रवर्तेत । नत्विको यणचीत्यादौ । किन्तु इको यणचीत्यादिसूत्रगतस्य अचीत्यादिसप्तम्यन्तपदस्य तस्मिन्नित्यनुकरणमितीत्यनन्तर गम्येऽर्थे इति शेष । निरिति नैरन्तर्ये । दिशिरुच्चारणे । एवञ्च इको यणचि रायोहलीत्यादिसूत्रेषु अचि हलि इत्येव सप्तम्यन्तपदगम्येऽर्थे अकारादौ दध्यत्र सुद्ध्युपास्य इत्यादिप्रयोगदशाया निर्दिष्टे अव्यवहितोच्चारिते सति पूर्वस्य कार्यं भवति । नतु व्यवहितोच्चारिते । नापि परस्येति फलितोऽर्थ । व्यवधानञ्च वर्णान्तरकृतमेव निषिध्यते । नतु कालकृतम् । इकोयणचीत्यादौ कालकृतव्यवधानस्य संहिताधिकारादेव निरासलाभात् । तत्र कालकृतव्यवधानस्याप्यनेनैव सूत्रेण निरासे संहिताधिकारस्य वैयर्थ्यापातात् । एवञ्च ये संहिताविकारबहिर्भूता 'आनङृतो द्वन्द्वे' 'देवताद्वन्द्वे च' इत्यादय उत्तरपदे परत आनडादिविधय ते सर्वे अग्नाविष्णू इत्यग्नाविष्णू इत्याद्यवग्रहे कालव्यवधानेऽपि भवन्ति । एतत्सर्वमभिप्रेत्य पर्यवसन्नार्थमाह । **सप्तमीनिर्देशेनेत्यादिना** ॥ इति सूत्राक्षरानुयायी पन्था । 'अतिशायनेतमप्' इत्यत्र तु नेय परिभाषा प्रवर्तते । सप्तम्यन्तातिशायनपदार्थस्य शब्दरूपत्वाभावेनाव्यवहितोच्चारितत्वनिर्दिष्टत्वाभावात् । नचैवमपि कर्तृकर्मणो कृतीत्यत्रापि अस्या परिभाषाया प्रवृत्तौ कर्तृषष्ठी कर्मणिषष्ठी च कृष्णस्य कृति जगत कर्ता कृष्ण इत्यत्रैव स्यात् । नतु कृति कृष्णस्य कर्ता जगत इत्यत्र इति वाच्यम् । लक्ष्यानुरोधेन क्वचिदेवञ्जातीयकेषु अस्या परिभाषाया अप्रवृत्तिरिति श्नान्नलोप इति सूत्रे भाष्ये प्रपञ्चितत्वात् । वस्तुतस्तु भाष्यानुसारेण अत्र सूत्रे निर्दिष्टग्रहण संहिताधिकारसूत्रञ्च विफलमेवेति इको यणचीत्यत्र वक्ष्यते । **तस्मादित्युत्तरस्य** ॥ 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' 'उदस्थास्तम्भ्वो पूर्वस्य' इत्यादिसूत्रगतपञ्चम्यन्तस्यानुकरण । तस्मादिति । इतिशब्दानन्तर गम्यत इति शेष । निरिति नैरन्तर्ये । दिशिरुच्चारणे । द्व्यन्तरित्यादिसूत्रेषु पञ्चम्यन्तगम्ये अर्थे द्व्यन्तरादिशब्दे निर्दिष्टे अव्यवहितोच्चारिते सत्येव तत परस्यैव भवति । न तु व्यवहितोच्चारिते द्व्यादिशब्दे । नापि तत पूर्वस्यैव भवतीति नियमार्थमिदम् । तदाह । **पञ्चमीनिर्देशेनेत्यादिना** ॥ उत्तरस्य किम् । 'तिङतिङ' इति निघात उत्तरस्यैव भवति । अग्निमीळे, नेह, ईळे अग्निम् । अव्यवहिते किम् । उत्

## ४२ । अलोऽन्त्यस्य । (१-१-५२)

षष्ठीनिर्दिष्टस्यान्त्यस्याल आदेश स्यात् ।

## ४३ । ङिच्च । (१-१-५३)

अयमप्यन्त्यस्यैव स्यात् ।—'सर्वस्य' (सू ४५) इत्यस्यापवाद ।

## ४४ । आदेः परस्य । (१-१-५४)

**परस्य यद्विहितं तत्तस्यादेर्बोद्धव्यम् । 'अलोऽन्त्यस्य' (सू ४२) इत्यस्यापवाद. ।**

---

प्रस्थानम् । इह उदस्स्थास्तम्भ्वोरिति पूर्वसवर्णो न भवति । **अलोऽन्त्यस्य** ॥ अलिति प्रत्याहारो वर्णपर्याय । अल इति षष्ठ्यन्तम् । 'षष्ठी स्थाने योगा' इत्यत षष्ठी स्थाने इत्यनुवर्तते । तच्च षष्ठीति प्रथमान्त तृतीयान्ततया विपरिणम्यते । निर्दिष्टस्येति शेष । स्थाने इत्यनन्तर विधीयमान इति शेष । स्थाने विधीयमान आदेश षष्ठीनिर्दिष्टस्य य अन्त्य अल् तस्य स्यादित्यर्थ । तदाह । **षष्ठीत्यादिना** ॥ त्यादादीनाम । य । स । आदेश इति किम् । आर्द्धधातुकस्येट् तृच ऋकारात् पूर्वो माभूत् । अल इति किम् । पदस्येत्याधिकृत्य विधीयमान वसुस्रंस्विति दत्व परमानडुद्भ्यामित्यत्र अन्त्यस्य कृत्स्नस्य पदस्य माभूत् । **ङिच्च** ॥ ङकार इत् यस्य स ङित् । अलोन्त्यस्येत्यनुवर्तते । तदाह । **अयमपीति** ॥ ङिदपीत्यर्थ । अवङ्, तातङ्, अनङ्, इत्यादिरादेश उदाहरणम् । नन्वलोऽन्त्यस्येति पूर्वसूत्रेणैव सिद्धे किमर्थमित्यत आह । **सर्वस्येति** ॥ 'अनेकाल् शित् सर्वस्य' इति वक्ष्यमाणस्य सर्वादेशत्वविधेरय विधिरपवाद । अपोद्यते बाध्यते अनेनेति अपवाद । बाहुळक । करणे घञ् । येननाप्राप्ते यो विधिरारभ्यते स तस्यापवाद इत्यपवादलक्षणम् । अप्राप्तेति भावे क्त । येनेति कर्तरि तृतीया । द्वौ नञावावश्यकत्व बोधयत । यत्कर्तृकावश्यकप्राप्तौ सत्या यो विधिरारभ्यते स आरभ्यमाणविधि तस्य अवश्यप्राप्तस्य अपवाद बाधक इति तदर्थ । अयञ्च न्यायसिद्ध । अवङादयो हि ङित आदेशास्सर्वे अनेकाल एव । तेषु चानेकाल्विशेषेषु विधीयमानेन ङितामन्त्यादेशत्वेन स्वविषये अवश्य प्राप्त अनेकाल् सामान्येन विहित सर्वादेशत्व बाध्यते । विशेषविहितत्वान्निरवकाशत्वाच्च । विशेषशास्त्र हि विशेषेषु झटिति प्रवर्तते । विशेषाणा स्वशब्देनोपात्तत्वात् । सामान्यशास्त्रन्तु सामान्यमुखेन विशेषेषु प्रवर्तत इति तस्य तेषु मन्दप्रवृत्ति । अतो विशेषशास्त्र प्रबलम् । उक्तञ्च भट्टवार्तिके 'अवश्यमेव सामान्य विशेष प्रति गच्छति । गतमात्रञ्च तत्तेन विशेषे स्थाप्यते ध्रुवम्' इति । किञ्च यदि ङिच्चेति शास्त्र अनेकाल्विशेषेषु ङित्सु न प्रवर्तेत, तर्हि तदनर्थकमेव स्यात् । अनेकाल्शित् सर्वस्येत्यस्य तु ङित्सु अप्रवृत्तावपि नानर्थक्यम् । तस्थस्थमिपा तान्तन्ताम । अस्तेर्भूरित्यादिष्वनेकाल्सु अङित्सु तस्य सावकाशत्वात् । अतो विशेषशास्त्र प्रबलमिति । **आदेः परस्य** ॥ **परस्येति** ॥ द्व्यन्तरुपसर्गेभ्योऽप ईदित्यादौ तस्मादित्युत्तरस्येति परिभाषया परस्य नियमित कार्य यत् तत्तस्यादेरेव भवति । नत्वलोऽन्त्यस्येति तदन्तस्येत्यर्थ । तदाह । **अलोन्त्यस्येत्यस्यापवाद इति** ॥ तत्र अल

## ४५ । अनेकाल्शित्सर्वस्य । (१-१-५५)

स्पष्टम् । 'अलोऽन्त्य' सूत्रापवाद । 'अष्टाभ्य औश्' (सू ३७२) इत्यादौ 'आदे. परस्य' (सू ४४) इत्येतदपि परत्वादनेन बाद्धयते ।

## ४६ । स्वरितेनाधिकारः । (१-३-११)

स्वरितस्वयुक्तं शब्दस्वरूपमधिकृतं बोद्धयम् । 'परनित्यान्तरङ्गापवादानामुत्त-

---

इत्यप्यनुवर्तनीयम् तेन द्वीपमित्यत्र ईत्व पान्तसमुदायस्य न भवति। **अनेकाल्शित् सर्वस्य॥** न एक अनेक, अनेक अल् यस्य स अनेकाल्, शकार इत् यस्य स शित्, अनेकाल्च शित् चेति समाहारद्वन्द्व । **स्पष्टमिति ॥** अनुवर्तनीयपदान्तराभावादिति भाव । अस्तेर्भूरित्याद्यु-दाहरणम् । ननु असधातोर्भूर्भवतीत्युक्ते कृत्स्नस्यैवादेश प्राप्त इति किमर्थमिद सूत्रमारभ्यत इत्यत आह । **अलोऽन्त्यसूत्रापवाद इति ॥** अलोन्त्येति सूत्रैकदेशानुकरणम् । अनुकरण-त्वादेव नापशब्द । अधिरीश्वर इति सूत्रैकदेशस्य प्राग्रीश्वरान्निपाता इति ग्रहणलिङ्गात् । स्या-देतत् । अष्टन् शब्दाज्जसि शसि च अष्टन आ विभक्ताविति आत्वे अष्टा अस् इति स्थिते अष्टा-भ्य औशिति कृताकारात् अष्टन परयोर्जश्शसोर्विधीयमान औशादेश अलोऽन्त्यस्येति बाधित्वा आदे परस्येत्यादेरकारस्य प्राप्त । अनेकाल्त्वाच्च सर्वादेश प्राप्त । एवञ्च 'अतो भिस ऐस्' इत्यादावपि । तत्र कतरच्छास्त्र बाध्य कतरच्च प्रवर्तत इत्यत किम् विनिगमकमित्यत आह । **अष्टाभ्य औशित्यादाविति ॥** आदिना अतो भिस ऐसित्यादि सङ्ग्रह । अष्टाभ्य औशि-त्यादौ आदे परस्येत्येतदपि परत्वादनेन बाध्यत इत्यन्वय । अस्तेर्भूरित्यादौ अनेकाल्शिदित्य-नेन यथा अलोऽन्त्यस्येति बाध्यते तथा अष्टाभ्य औशित्यादौ आदे परस्येत्येतदपि बाध्यत इत्यर्थ । ननु अस्तेर्भूरित्यादौ अलोऽन्त्यस्येति प्राप्ते सत्येवानेकाल्शिदित्यारम्भाद्येननाप्राप्तिन्याये-नापवादत्वात्तेन तत्रालोऽन्त्यस्येत्यस्य बाधो युज्यते । आदे परस्येत्यस्य तु अनेकाल्शित् सर्व-स्येति नापवाद । अस्तेर्भूरित्यादावादे परस्येत्यप्राप्तावपि तत्प्रवृत्तेरित्यत आह । **परत्वादिति ॥** विप्रतिषेधे पर कार्यमिति तुल्यबलविरोधे परप्राबल्यस्य वक्ष्यमाणत्वादिति भाव । आदे पर-स्येत्यस्यावकाश द्व्यन्तरुपसर्गेभ्योऽप ईदित्यादि । अनेकाल् शित् सर्वस्येत्यस्यावकाश अस्तेर्भू, इदम इश् इत्यादि. । अतस्तुल्यबलत्वमुभयो । **स्वरितेनाधिकारः ॥** अधिकार व्याप्टृति । यथा लोके अधिकृतो ग्रामेऽसाविति व्यापृत इति गम्यते । शब्दस्य च उत्तरसूत्रेष्वनुवृत्तिरेव व्यापृति । स्वरितेन स्वरितविशेषेण अधिकार उत्तरत्रानुवृत्तिरूपव्यापार प्रत्येतव्य । यत् पद शास्त्रकृता स्वरिताख्यस्वरविशेषविशिष्टमुच्चारित तदुत्तरसूत्रेष्वनुवर्तनीयमिति यावत् । फलित-माह । **स्वरितत्वयुक्तमित्यादिना ॥** आनुनासिक्यवत् स्वरितोच्चारणमपि प्रतिज्ञागम्यम् । अनुवृत्तावुत्तरावधिस्तु व्याख्यानादेवावगन्तव्य । यद्यपि निवृत्तिवदनुवृत्तिरपि व्याख्यानादेव भवि-ष्यतीति किं सूत्रेण । तथाच भाष्ये तत् प्रयोजन बहुधा प्रपञ्चितम् । **परनित्येति ॥** परादी-नाम्मध्ये पूर्वपूर्वापेक्षया उत्तरमुत्तर शास्त्र बलवत्तरमित्यर्थः । उत्तरोत्तरमित्यत्र आनुपूर्व्ये द्वे

रोत्तरं बलीय.' (प ३९)। 'असिद्धं बहिरङ्गमन्तरङ्गे' (प ५१)। 'अकृतव्यूहाः

वाच्ये इति द्वित्वम्। 'कर्मधारयवदुत्तरेषु' इति कर्मधारयवद्भावात् सुपो लुक्। बलवच्छब्दात् 'द्विवचनविभज्योपपदे तरबीयसुनौ' इति ईयसुन्। 'विन्मतोर्लुक्' इति मतुपो लुक्। परापेक्षया नित्यान्तरङ्गापवादा । नित्यापेक्षयापि अन्तरङ्गापवादौ । अन्तरङ्गापेक्षयापि अपवाद । इत्येव क्रमेण पूर्वपूर्वापेक्षया उत्तरोत्तरबलवत्वमिति फलितोऽर्थ । पर विप्रतिषेधसूत्रात् बलवत् । परान्नित्य यथा। तुदति। अत्र 'तुदादिभ्यश्श' इति शप्रत्यय बाधित्वा परत्वात् लघूपधगुण प्राप्त। स च शप्रत्यये प्रवृत्ते सति न प्रवृत्तिमर्हति । शप्रत्ययस्तु कृते अकृतेऽपि लघूपधगुणे प्रवृत्तिमर्हतीति स नित्य । कृताकृतप्रसङ्गी यो विधिस्स नित्य इति हि तल्लक्षणम्। अतो नित्यश्शप्रत्यय लघूपधगुण बाधित्वा प्रथम प्रवर्तते। तत 'सार्वधातुकमपित्' इति शस्य ङित्वात् 'क्ङिति च' इति निषेधान्नगुण । अक्लृप्ताभावकस्य नित्यशास्त्रस्याभावकल्पनापेक्षया क्लृप्ताभावकस्य नित्यशास्त्रस्यैव तत्कल्पन युज्यते इति नित्यस्य बलवत्त्वे बीजम्। परादन्तरङ्ग यथा। उभये देवमनुष्या। अत्र प्रथमचरमेति परमपि विकल्प बाधित्वा सर्वादीनीति नित्यैव सर्वनामसञ्ज्ञा भवति । तस्या विभक्तिनिरपेक्षत्वेन अन्तरङ्गत्वात् । अल्पापेक्षमन्तरङ्गमिति हि तल्लक्षणम्। तस्य बलवत्त्वे बीजमाह। **असिद्ध बहिरङ्गमन्तरङ्गे ॥** अन्तरङ्गशास्त्रे प्रसक्ते बहिरङ्गशास्त्रमविद्यमान प्रत्येतव्यमित्यर्थ । इयन्तु परिभाषा 'वाहऊठ्' सूत्रे भाष्ये स्थिता। परादपवादो यथा। दध्ना 'अस्थिदधि' इत्यनङ्। इह परमप्यनेकाल्शिति सर्वादेश बाधित्वा ङिच्चेत्यन्तादेश । तस्य येन नाप्राप्तिन्यायेन तदपवादत्वात्। अपवादस्य बलवत्वे बीजन्तु अनुपदमेवोक्तम्। नित्यादन्तरङ्ग यथा। ग्रामणिनि कुले। इह नित्यमपि इकोऽचीति नुम बाधित्वा 'ह्रस्वो नपुसक' इति ह्रस्व । प्रथमत कृते नुमि अनजन्तत्वात् ह्रस्वो न स्यात् । अन्तरङ्गादपवादो यथा। दैत्यारि । श्रीश । परमपि सवर्णदीर्घ बाधित्वा अन्तरङ्गत्वात् आद्गुणे यणि च प्राप्ते अपवादत्वात् सवर्णदीर्घ । **अकृतव्यूहाः पाणिनीयाः*** ॥ न कृत अकृत व्यूह प्रकृतिप्रत्ययविवेचन येषा-

* पाणिनिना प्रोक्तमधीयते विदन्ति वा पाणिनीया पाणिनिशास्त्राध्येतार तद्वेदितारो वा। विशिष्ट ऊह व्यूह शास्त्रप्रवृत्तिविषयो निश्चय । न कृत अकृत अकृत व्यूह यैस्ते अकृतव्यूहा । भाविनिमित्तविनाशे इत्यध्याहार । बहिरङ्गेण शास्त्रेणान्तरङ्गशास्त्रनिमित्तविनाशे पश्चात् सभाविते अन्तरङ्गन्नेति यावत्। एतत्परिभाषाया ज्ञापकन्तु 'समर्थाना प्रथमाद्वा' इति सूत्रे विद्यमान समर्थानामिति । समर्थानामिति सूत्रे कैयटस्तु समर्थवचनेनेयम्परिभाषा ज्ञाप्यते। 'अकृतव्यूहा पाणिनीया' इति। तेन पपुष इत्यादौ अन्तरङ्गत्वात्पूर्वं कृतोऽपीडागमो निवर्तत इति वदन्, अकृत व्यूह विशिष्टस्तर्क निमित्तकारणविनाशेऽपि कार्यस्थितिरूपो यैरित्यर्थमभिप्रैति। निमित्तापाये नैमित्तिकस्याप्यपाय इति यावत् । अस्या परिभाषाया उदाहरणं सेदुष इति। अत्र प्रक्रियाक्रमस्तु, 'भाषाया सदवसश्रुव' इत्यनेन सदधातो परस्य लिट क्वस्वादेशे 'लिटिधातो' इति सदेर्द्वित्वे 'अत एकहल्मध्ये अनादेशादेर्लिटि' इत्यनेन एत्वाभ्यासलोपे 'वस्वेकाजाद्घसाम्' इत्यनेन क्वसोर्वकारस्य वलादिलक्षणे इडागमे कर्तव्ये 'वसोस्सम्प्रसारणम्' इत्यनेन भविष्यता सम्प्रसारणेन वकारस्यापहारशङ्कासमुन्मेषात् तादृशविनक्ष्यदवस्थापन्न वकारं निमित्तीकृत्य प्रवृत्तियोग्यमेतदिडागमरूप कार्यन्नभवति। कृतमपि वा निवर्तते इति।

पाणिनीयाः' (प ५७)। निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वन्तीत्यर्थः।

। इति परिभाषाप्रकरणम्।

---

## अथाच्सन्धिप्रकरणम्।

## ४७। इको यणचि। (६-१-७७)

**इकः स्थाने यण्स्यादचि संहितायां विषये। 'सुधी उपास्य.' इति स्थिते।**

---

न्ते अकृतव्यूहा पाणिनिशिष्या इत्यक्षरार्थं। तर्हि सर्वस्य शास्त्रस्य वैयर्थ्यमित्यतोऽध्याहृत्य व्याचष्टे। **निमित्तमित्यादिना**॥ सेदुष इत्याद्युदाहरणम्। तच्च शब्दाविकारे सेदिवस् शब्द-निरूपणावसरे मूल एव स्पष्टीभविष्यति। इय परिभाषा निर्मूला निष्फलाचेति परिभाषेन्दुशेखरे स्पष्टम्। **इकोयणाचि**॥ इक इति षष्ठी। अतष्षष्ठी स्थानेयोगेति परिभाषया स्थान इति लभ्यते। स्थान प्रसङ्ग इत्युक्तम्। वर्णाना वर्णान्तराधिकरणत्वासम्भवात् अचीति सतिसप्तमी। तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषया वर्णान्तराव्यवहितोच्चारितेऽचि सति पूर्वस्येति लभ्यते। एवञ्च अचि परत इत्यर्थलभ्यम्। सहितायामित्यधिकृतम्। ततश्चार्द्धमात्राधिककालव्यवधानाभावो लभ्यते। एवञ्च फलितमाह। **इकः स्थान इत्यादिना**॥ इदञ्च सूत्राक्षरानुसारिप्राचीनमतानुसारेण। सहितायामिति सूत्रभाष्ये तु सामीपिकात्मकौपश्लेषिकाधिकरण अचीति सप्तमी तस्मिन्नित्यनेना-श्रित्य सहिताधिकार प्रत्याख्यात। इत्थ हि तत्र भाष्यम्। अय योगश्शक्य अवक्तु। कथम्? आधि-करणन्नाम त्रिप्रकार, व्यापकमौपश्लेषिक वैषयिकमिति। शब्दस्य तु शब्देन कोऽन्योभिसम्बन्धो भवितुमर्हति अन्यदत उपश्लेषात्। इकोयणचि अच्युपश्लिष्टस्येति। तत्रान्तरेण सहिताग्रहण सहितायामेव भविष्यतीति। उप समीपे श्लेष सम्बन्ध उपश्लेष। तत्कृतमधिकरणमौपश्ले-षिक सामीपिकमिति यावत्। एवञ्च अच्समीपवर्तिन इक इति फलति। सामीप्यञ्च कालतो वर्णतश्च व्यवधानाभाव। एवञ्च असहितायामुक्तसामीप्याभावादेव यणभावसिद्धे सहिताधिकारो न कर्तव्य इति भाष्यार्थं। एवञ्च तुल्यन्यायत्वात् तस्मिन्निति निर्दिष्टे पूर्वस्येत्यत्राप्यौपश्लेषिकाधि-करणे सप्तमी। ततश्च अचीत्यादि सप्तम्यन्तार्थे अकारादावुच्चारिते सामीप्यसबन्धेन विद्यमानस्य पूर्वस्य कार्यं स्यादित्यर्थं फलति, नत्वव्यवहितोच्चारिते इति, अव्यवहितत्वविशेषणमुच्चारिते देयम्। सामीपिकाधिकरणसप्तम्यैव तल्लाभात्। सामीप्यस्य च तत्र कालतो वर्णतश्च व्यवधाना-भावात्मकत्वात्। एवञ्च तत्र नैरन्तर्यार्थं निग्रहणन्न कर्तव्यम्। इदञ्च स्तुक्रमोरिति सूत्रे, तत्र च दीयते, इति सूत्रे च कैयटे च स्पष्टम्। अधिकरणत्रैविध्यन्तु कारकाधिकारे आधारोऽधिकरणमि-त्यत्र स्पष्टीकरिष्यते। **सुधी इति**॥ ध्यै, चिन्तायामिति धातो ध्यायतेस्सम्प्रसारणञ्चेति क्विपि यकारस्य सम्प्रसारणे इकारे पूर्वरूपे हलश्चेति दीर्घे च धीशब्द। सुष्ठु ध्यायन्तीति सुधिय। सु शोभना धीर्येषामिति वा सुधिय। सुधीभिरुपास्य इति विग्रह.। 'कर्तृकरणे कृता बहुळम्' इति समास। 'सुपोधातुप्रातिपदिकयो' इति भिसो लुक्। सुधी उपास्य इति स्थिते ईकारस्य यकार

स्थानत आन्तर्यादीकारस्य यकार । 'सुध्य्-उपास्य' इति स्थिते ।

### ४८ । अनचि च । (८-४-४७)

अच परस्य यरो द्वे वा स्तो न त्वचि । इति धकारस्य द्वित्वम् ।

### ४९ । स्थानिवदादेशोऽनल्विधौ । (१-१-५६)

---

इत्यन्वय । प्रत्याहारेषु तद्वाच्यवाच्येषु लक्षणा नाज्झलाविति सूत्रे प्रपञ्चिता । तत्स्फोरणाय ईकार उदाहृत । ननु ईकारस्य वरला वा कुतो न स्यु । यणत्वाविशेषादित्यत आह। **स्थानत आन्तर्यादिति** ॥ तालुस्थानकत्वसाम्यादीकारस्य स्थाने स्थानेऽन्तरतम इति यकार एव भवति । न तु वरला । भिन्नस्थानकत्वादित्यर्थ । अत एव 'यथासङ्ख्यमनुदेशस्समानाम्' इति सूत्रे भाष्यम् । किमिहोदाहरणम् । इकोयणचि । दध्यत्र । मध्वत्र । नैतदस्ति । स्थानेऽन्तरतमेनाप्येतत् सिद्धमिति स्थानेऽन्तरतम इति सूत्रभाष्ये तु किमिहोदाहरणम् । इकोयणचि । दध्यत्र । मध्वत्र । नैतदस्ति । सङ्ख्यातानुदेशेनाप्येतत् सिद्धमित्युक्तम् । यथासङ्ख्यसूत्रेणेत्यर्थ । नन्विह यण्शब्देन निरनुनासिका यवला रेफश्चेति चत्वारो गृह्यन्ते । यणो भाव्यमानतया तेन सवर्णाना ग्रहणाभावात् । गुणाना अभेदकत्वेऽपि यवलाष्षट् रेफश्चेति सप्त गृह्यन्ते । इक्शब्दे तु षट्षष्टिर्गृह्यत इति विषमसङ्ख्याकत्वात् कथमिह यथासङ्ख्यसूत्रप्रवृत्तिरिति चेन्न । इक्त्वयण्त्वादिना अनुगतीकृताना समत्वात् । ननु ऋऌवर्णाभ्या प्रत्येक त्रिंशदुपस्थितौ ऌवर्णाना रेफादेशस्य ऋवर्णाना लादेशस्य च प्रसङ्ग इति न यथासङ्ख्यसूत्रेण निर्वाह इति चेत् । शृणु । ऋत्वावच्छिन्नस्य रेफो भवति । ऌत्वावच्छिन्नस्य लकारो भवतीति यथा सङ्ख्यसूत्राल्लभ्यते । ऋत्वजातिश्च न ऌवर्णेषु । ऌत्वजातिश्च न ऋवर्णेषु । ऋऌवर्णयो सावर्ण्यविधिबलात्तु ऋत्व ऌकारे, ऌत्व ऋकारे च, आरोप्यते कार्यार्थम् । एवञ्च वास्तव ऋत्व ऌत्व च आदायात्र यथासङ्ख्यप्रवृत्तिर्निर्बाधेत्यास्तान्तावत् । सुध् य् इति स्थिते । धकारस्य द्वित्वमिति वक्ष्यमाणेनान्वय । केनसूत्रेणेत्यत आह । **अनचि च** ॥ 'यरोऽनुनासिकेऽनुनासिकोवा' इत्यत यर इति षष्ठ्यन्त वेति चानुवर्तते । 'अचो रहाभ्या द्वे' इत्यत अच इति पञ्चम्यन्त द्वे इति चानुवर्तते । न अच् अनच् तस्मिन् अनचीति न पर्युदास । 'तथा सति नञिवयुक्तमन्यसदृशे तथाह्यर्थगति' इति न्यायेन अज्भिन्ने हलीत्यर्थस्स्यात् । तथासति लाघवाद्धलीत्येव वदेत् । रामात् इत्याद्यवसानेषु च द्वित्व न स्यात् । अत अचि न भवतीत्यसमर्थसमासमाश्रित्य प्रतिषेधपर वाक्यान्तरम् । तदाह । **अचः परस्येत्यादिना । इति धकारस्येति** ॥ अनेन सूत्रेण धकारस्य द्विरुच्चारणमित्यर्थ । धकारस्य उकारादच परत्वादच्परकत्वाभावाच्चेति भाव । ननु सुध् य् इत्यत्र ईकारस्थानिकस्य यकारस्य स्थानिवद्भावेनाच्त्वात् अच्परकत्वात् कथ धकारस्य द्वित्वमिति शङ्का हृदि निधाय तस्य स्थानिवद्भावप्रापक सूत्रमाह । **स्थानिवदादेशः** ॥ गुरुस्थानापन्ने गुरुपुत्रादौ स्थानापत्त्या धर्मलाभो लोकतस्सिद्ध । कुशादिस्थानापन्नेषु शरादिषु च वैदिकन्यायसिद्ध । इह तु शास्त्रे स्व रूप शब्दस्येति वचनात् स्थानिधर्मा आदेशेषु न प्राप्नुयुरिति तत्प्राप्त्यर्थ

आदेशः स्थानिवत्स्यात् न तु स्थान्यलाश्रयविधौ । अनेनेह यकारस्य स्थानिवद्भावेनाच्त्वमाश्रित्य 'अनचि' (सू ४८) इति द्वित्वनिषेधो न शङ्क्यः 'अनल्विधौ' इति तन्निषेधात् ।

---

स्थानिवदादेश इत्यारब्धम् । स्थान प्रसङ्ग इत्युक्तम् । यस्य स्थाने अन्यद्विधीयते तत् स्थानि । येन विधीयमानेन अन्यत् प्रसक्तनिवर्तते स आदेश । स्थानिना तुल्य स्थानिवत् । तेन तुल्यमिति वतिप्रत्यय । आदेश स्थानिना तुल्यो भवति । स्थानिधर्मको भवतीति यावत् । अलिति वर्णपर्याय । विधीयत इति विधि कार्य । अलाश्रयो विधि अल्विधि । न अल्विधि अनल्विधि । अलाश्रयाभिन्ने कार्ये कर्तव्ये इति प्रतीयमानोऽर्थ । अलाश्रयकार्ये कर्तव्ये स्थानिवन्नभवतीति फलितम् । अलाश्रयेति सामान्यवचनात् अला विधि, अल परस्य विधि, अलो विधि, अलि विधिश्चेति, सर्वसङ्ग्रह । अला विधौ यथा । व्यढोरस्केन। अत्र विसर्जनीयस्य स, इति विसर्गस्थानिकस्य सकारस्य विसर्गवत्वमाश्रित्य अड्व्यवाय इति णत्व प्राप्तन्नभवति । अल परस्य विधौ यथा । द्यौ । दिवऔदिति वकारस्थानिकस्य औकारस्य स्नानिवद्भावेन हल्त्वात् तत परस्य सोर्हल्ड्याादिलोप प्राप्तो न भवति । अलो विधौ यथा । द्युकाम । दिव उदिति वकारस्थानिकस्य उकारस्य स्थानिवद्भावेन वकारत्वात् 'लोपो व्योर्वलि' इति लोप प्राप्तो न भवति । अलि विधौ यथा । क इष्ट । यजे क्त । अत्र यकारस्थानिकसम्प्रसारणस्य इकारस्य स्थानिवद्भावेन हश्त्वात् 'हशि च' इत्युत्व प्राप्त न भवति । अल्चेह स्थानिभूत, स्थान्यवयवश्च, गृह्यते । ततश्च आदेशस्य स्थानिभूतो योऽल् स्थान्यवयवश्च योऽल् तदाश्रयविधौ न स्थानिवदिति फलति । तत्र स्थानीभूताल्विधौ व्यूढोरस्केनेत्युदाहृतमेव । यथा वा । धिवि, प्रीणन इति धातोर्लटि प्रथमपुरुषस्य झेरन्तादेशे 'धिन्विकृण्व्योरच' इति विकरणस्य उकारस्य यणि वकारे सति तस्य स्थानिवद्भावेनार्धधातुकत्वात् स्वतो वलादित्वाच्च इडागम प्राप्तो न भवति । वकारस्य स्थानिभूतो योऽल् उकार तदादेश वकार आर्धधातुकत्वेनाश्रित्य प्रवर्तमानस्य इट स्थान्यलाश्रयत्वात् । स्थान्यवयवालाश्रयविधौ यथा । प्रतिदीव्य । इह क्त्वादेशस्य य इत्यस्य वलाद्यार्धधातुकत्वात् इडागम प्राप्तो न भवति । इडागमस्य वलाद्यार्धधातुकविषये स्थान्यवयवभूतवलाश्रयत्वात् । तदेतदाह । **आदेशः स्थानिवत्स्यान्नतु स्थान्यलाश्रयविधाविति** ॥ स्थान्यलाश्रयेत्यत्र स्थानीति किं । रामाय । इह 'सुपि च' इतिदीर्घस्य यञादिसुबाश्रयस्य आदेशगतयकाररूपाश्रयत्वेपि तस्मिन् कर्तव्ये यादेशस्य स्थानिवद्भावेन सुप्त्व भवत्येव । दीर्घस्य आदेशगतयकाररूपालाश्रयत्वेऽपि स्थान्यलाश्रयत्वाभावात् । न च नीञ्धातोर्ण्वुलि अकादेशे वृद्धौ नै अक इति स्थिते ऐकारस्य स्थानिवद्भावेन ईकारधर्मकत्वादायादेशो न स्यात् । ईकारस्य आयादेशाभावादिति वाच्यम् । इह हि स्थानिप्रयुक्त यत् कार्य शास्त्रीय तदेवातिदिश्यते । ईकारस्य चैकाराभावो नशास्त्रविहित इति न तस्य ईकारस्थानिके ऐकारे अतिदेश इत्यास्तान्तावत् । **अनेनेति** ॥ उदाहृतेन स्थानिवत्सूत्रेण इह सुध् य् इत्यत्र ईकारस्थानिकस्य यकारस्य स्थानिवद्भावेन अच्कार्यकारित्वमाश्रित्य अचि न द्वित्वमित्यर्थकेन अनचीत्यनेन धकारस्य द्वित्वनिषेधो न शङ्कनीय इत्यर्थ । कुत इत्यत आह । **अनल्विधाविति**

## ५० । अचः परस्मिन्पूर्वविधौ । (१-१-५७)

**अल्विद्ध्यर्थमिदम् । परनिमित्तोऽजादेश स्थानिवत्स्यात् स्थानिभूतादच. पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये । इति यण स्थानिवद्भावे प्राप्ते ।**

---

**तन्निषेधादिति** ॥ स्थानिवत्वनिषेधादित्यर्थ । यकारादेशस्थानीभूतो योऽल् ईकार तद्गतमच्त्व यकारे आश्रित्य प्रवर्तमानस्य यकारद्वित्वनिषेधस्य स्थान्यलाश्रयत्वादिति भाव । ननु सुध् य् इत्यत्र मास्तु स्थानिवदिति सूत्रेण स्थानिवद्भाव । तदुत्तरसूत्रेण तु स्थानिवत्त्व स्यादेवेति शङ्कामुद्भावयिष्यन् तथाविधमुत्तरसूत्रमाह । **अचःपरस्मिन्** ॥ स्थानिवत्सूत्रेणैव सिद्धे किमर्थमिद सूत्रमित्यत आह । **अल्विद्ध्यर्थमिति** ॥ अलाश्रयविधावपि स्थानिवद्भावार्थमित्यर्थ । तेन वव्रश्चेति सिद्ध्यति । ओ व्रश्चू, च्छेदने । लिटि तिपि णलि द्वित्वम् । लिट्यभ्यासस्येत्यभ्यासे रेफस्य सम्प्रसारणम् ऋकार । पूर्वरूपम् । उरदत्वम् । रपरत्वम् । हलादिश्शेष । तत्राभ्यासे वकारस्य पुनस्सम्प्रसारणन्न । ऋकारस्थानिकस्य उरदत्वस्य स्थानिवद्भावेन सम्प्रसारणतया 'न सम्प्रसारणे सम्प्रसारणम्' इति निषेधात् । पूर्वसूत्रेण त्वत्रस्थानिवद्भावो न सम्भवति । सम्प्रसारणनिषेधस्य स्थान्यलाश्रयत्वादिति भाव । पूर्वसूत्रादिह स्थानिवदादेश इत्यनुवर्तते । अच इत्येतदादेश इत्यनेनान्वेति अच आदेश इति । परस्मिन्निति सतिसप्तमी । ततश्च परनिमित्तक इति लभ्यते । तच्चादेशविशेषणम् । तदाह । **परनिमित्तोऽजादेशः स्थानिवत्स्यादिति** ॥ विधीयत इति विधि कार्यम् । पूर्वस्य विधि पूर्वविधि पूर्वत्वञ्च यद्यपि सावधिकम् । त्रयञ्चात्र सन्निहितम् । स्थानी आदेश परनिमित्तञ्चेति । तत्र स्थानी तावन्नावधिर्भवितुमर्हति । तस्यादेशेनापहारात् । नाप्यादेश । नापि परनिमित्तम् । वैयाकरण इत्यत्र इकारस्थानिकयणादेशात् तत्परनिमित्तादाकाराच्च पूर्वस्य नय्वाभ्यामित्यैकारस्य आयादेशे कर्तव्ये यणादेशस्य स्थानिवद्भावेनाच्त्वापत्ते । तथापि स्थान्यपेक्षयैवात्र पूर्वत्व विवक्षितम् । स्थानिन आदेशेनापहृतत्वेऽपि भूतपूर्वगत्या तत्पूर्वत्वस्य सम्भवात् । तदेतदाह । **स्थानिभूतादच. पूर्वत्वेन दृष्टस्य विधौ कर्तव्य इति** ॥ तत्र स्थानिनि सति यद्भवति तदादेशेऽपि भवति यन्नभवति तदादेशेऽपि न भवतीत्येवमशास्त्रीयस्यापि कार्याभावस्य अतिदेशो भवति । तत्राद्ये वव्रश्चेत्युदाहृतमेव । तत्र न सम्प्रसारणे सम्प्रसारणमिति निषेधकार्यस्य शास्त्रीयत्वात् । द्वितीये तु गणयतीत्युदाहरणम् । गण, सङ्ख्यान इति चुरादौ अदन्तधातु । तस्माण्णिच् । अतो लोप । तिप् शप् णेर्गुण अयादेश गणयतीति रूपम् । अत्र णिचि परत उपधाभूतस्य गकारादकारस्य 'अत उपधाया' इति न भवति । प्रकृतसूत्रेणाल्लोपस्य स्थानिवद्भावात् अकारे स्थानिनि सति गकारादकारस्य उपधात्वभङ्गादुपधावृद्धिर्नप्रवृत्तिमर्हति । वृद्ध्यभावस्याशास्त्रीयत्वेऽपि अल्लोपे अतिदेशात् । न चात्र गकारादकारस्य स्थान्यकारान्नपूर्वत्वम् । णकारेण व्यवधानादिति वाच्यम् । पूर्वत्व ह्यत्र व्यवहिताव्यवहितसाधारणम् । उत्तरसूत्रे स्वरे निषेधाल्लिङ्गात् । तच्च तत्रैव स्पष्टीभविष्यतीत्यलम् । **इति यण इति** ॥ अनेन सूत्रेण सुध् य् इत्यत्र

## ५१। न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु। (१-१-५८)

**पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न**

---

धकारस्य द्वित्वनिषेधे कर्तव्ये ईकारस्थानिकस्य यकारस्य स्थानिवद्भावे प्राप्ते तत्प्रतिषेधसूत्रमारभ्यत इत्यर्थ । **नपदान्तद्विर्वचन** ॥ स्थानिवदादेश इति अच परस्मिन्निति चानुवर्तते । परनिमित्तकोऽजादेशो न स्थानिवदित्यन्वय । पदान्तश्च द्विर्वचनञ्च वरे च यलोपश्च स्वरश्च सवर्णश्च अनुस्वारश्च दीर्घश्च जश्च चर्चेति द्वन्द्व । तेषा विधय विधानानि । कर्मणि षष्ठ्या समास । ततश्च पदान्तादिषु विधेयेषु इति लभ्यते। वर इत्यनेन वरे योऽजादेशस्स विवक्षित । आर्षो द्वन्द्व । सप्तम्या अलुक्च । विधिशब्द प्रत्येकमन्वेति । पदान्तविधौ द्विर्वचनविधावित्यादि । पदस्यान्त चरमावयव । पदान्तस्य विधाने पदान्तकर्मके विधाने पदस्य चरमावयवे कार्ये द्विर्वचनादौ च कार्ये इति यावत् । तदाह । **पदस्य चरमेत्यादिना** ॥ पदान्तस्य स्थाने विधाविति तु न व्याख्यातम् । तथा सति एषो यन हससीत्यसिद्धे । तथाहि । एष यन् इति छेद । इण्धातोर्लटश्शतरि शपि लुकि इकारस्य इणो यणिति यण् । अत्र एतत्तदोरिति सुलोपो न भवति । तस्य हलि परतो विधानात् । इह च तस्मिन् कर्तव्ये इकारस्थानिकस्य यकारस्य स्थानिवद्भावेनाच्त्वात् । नच न पदान्तेति निषेधश्शङ्क्य । यो विधीयमान पदस्य चरमावयव सपद्यते तत्रैव तन्निषेधात् । इह च विधेयस्य सुलोपस्य पदानवयवत्वात् । पदान्तस्य स्थाने विधाविति व्याख्याने तु इह यकारस्य स्थानिवद्भावो न सिध्येत् । सुलोपस्य पदान्तसकारस्य स्थाने विधानात् । अत्र हशि चेत्युत्वे तु कर्तव्ये यकारो न स्थानिवद्भवति । कारस्य विधीयमानस्य पदचरमावयवत्वात् । एवञ्च पदान्तविधावित्यस्य एषो यन् इत्येतदुत्वविषये उदाहरणम् । सुलोपविषये तु प्रत्युदाहरण भाष्ये स्पष्टम् । भाष्यप्रदीपोद्योते स्पष्टतरमेतत् । पदान्तविधौ कानि सन्तीत्याद्युदाहरणमनुपदमेव मूले स्पष्टीभविष्यति । द्विर्वचने सुध्य् य इत्युदाहरणम् । नचेह द्वित्वे कर्तव्ये यकारस्य स्थानिवद्भावविरहेऽपि तन्निषेधे स्थानिवद्भावस्स्यादेवेति वाच्यम् । अनचिचेति द्वित्वस्यानैमित्तिकतया तद्विषये यकारस्य स्थानिवद्भावस्यानपेक्षत्वेन तत्र तन्निषेधस्य वैयर्थ्यापत्त्या द्विर्वचनशब्देनात्र अचि नेति द्वित्वनिषेधस्यैव विवक्षितत्वादिति भाव । वरे यथा । यायावर । 'यश्च यङ' इति या धातोर्यङन्ताद्वरच् । सन्यङोरिति द्वित्वम् । यायाय वर इति स्थिते अतो लोप इति यङोऽकारस्य लोप । लोपोव्योरिति यकारलोप । अत्र अजाद्यार्द्धधातुकमाश्रित्य 'आतो लोप इटि च' इत्याकारलोपे कर्तव्ये अल्लोपो न स्थानिवत् । यलोपे यथा । याति । याधातोर्यङि द्वित्व क्विच् यायायति इति स्थिते, अतो लोप, लोपोव्योरिति यलोप अल्लोपस्य स्थानिवत्वादातो लोप लोपोव्योरिति यलोप यातिरिति रूपम् । अत्र अल्लोपो यलोपे कर्तव्ये न स्थानिवत् । न च वाय्वोरित्यत्रापि लोपो व्योरिति यलोपे कर्तव्ये उकारादेशस्य वकारस्य स्थानिवत्त्वनिषेधस्स्यादिति वाच्यम् । स्वरदीर्घयलोपेषु लोप एवाजादेशो न स्थानिवदिति वार्तिके परिगणनात् । इह

च वकारस्य लोपरूपत्वाभावात्। स्वरविधौ यथा। चिकीर्षक। चिकीर्ष इति सन्नन्तात् ण्वुल्। अकादेश। सनोऽकारस्य अतो लोप। अत्र ईकारस्य लितीत्युदात्तत्वे कर्तव्ये अल्लोपो न स्थानिवत्। यद्यपि ईकार अल्लोपस्थानीभूतादकारान्नाव्यवहितपूर्व इति स्थानिवद्भावस्य प्राप्तिरिह नास्ति। तथाप्यस्मादेव ज्ञापकात् पूर्वसूत्रे पूर्वत्व व्यवहिताव्यवहितसाधारणम्। तत्प्रयोजनन्तु पूर्वसूत्र एवोक्तम्। सवर्णविधौ यथा। शिण्ड्ढि। शिष् इति धातो रौधादिकाल्लोण्मध्यमपुरुषैकवचनम्। सिप् श्नम्। शिनष् सि। हित्व। धित्व। ष्टुत्व। षस्य जश्त्व। डकार शिनड्ढि श्नसोरल्लोप नश्चापदान्तस्येत्यनुस्वार अनुस्वारस्य ययीति तस्य परसवर्ण णकार शिण्ड्ढि इति रूपम्। अत्र परसवर्णे कर्तव्ये अल्लोपो न स्थानिवत्। वस्तुतस्तु सवर्णविधौ नेदमुदाहरणम्। श्नमकारस्य लोपोऽत्र अजादेश। तत्स्थानीभूत श्नमकार एव। तस्मिन् सति नकारस्यानुस्वारप्रसक्तिरेव नास्ति। तथाचानुस्वारस्य स्थानीभूतादच पूर्वत्वेन कदाप्यदृष्टत्वात्तस्य परसवर्णे कर्तव्ये अच परस्मिन्नित्यल्लोपस्य स्थानिवत्त्व न प्रसक्तमिति किन्तत्प्रतिषेधेन। यत्तु तत्वबोधिन्या अनुस्वारस्य स्थानिभूतो नकार श्नमकारात् पूर्वत्वेन दृष्ट इति तत्स्थानिकानुस्वारस्यापि तत्पूर्वत्वेन दृष्टत्व स्थानिद्वाराऽपि पूर्वत्वाभ्युपगमादित्युक्तम्। एव सति तितउमाचष्टे तितापयतीत्यत्र पुगागमो न स्यात्। 'तत्करोति तदाचष्ट' इति णिच्। इष्ठवद्भावादुकारस्य टेरिति लोप। अचोञ्णितीति तकारादकारस्य वृद्धि आकार पुगागम। तितापीत्यस्मात् लट् तिप् शप् गुण अयादेश तितापयतीति रूपम्। अत्र अचोञ्णितीति वृद्ध्या लब्धस्य आकारस्य पुगागमे कर्तव्ये उकारलोपस्य स्थानिवद्भावे सति उकारेण व्यवधानेन णिपरकत्वाभावात् पुगागमो न स्यात्। आकारस्य लोपस्थानिभूतादुकारात् पूर्वत्वस्य स्वत अभावेऽपि स्थानिद्वारा सत्वादिति सिद्धान्तरत्नाकरे दूषितम्। प्रौढमनोरमाव्याख्याने तु शब्दरत्ने पादमाचष्टे पादयति तत क्विप् पात् हसतीत्यादौ 'झयोह' इति पूर्वसवर्णे कर्तव्ये पूर्वस्मात्परस्य विधिरिति पञ्चमीसमास तत्प्राप्तस्थानिवद्भावनिषेधार्थमिह सूत्रे सवर्णग्रहणमिति प्रपञ्चितम्। अनुस्वारविधौ यथा। शिंषन्ति। शिष्, धातोर्लटि झि झोऽन्त। श्नसोरल्लोप। नश्चापदान्तस्येत्यनुस्वार। शिंषन्ति। इह तु न परसवर्ण। षकारस्य यय्त्वाभावात्। अत्र अनुस्वारे कर्तव्ये अल्लोपो न स्थानिवत्। अत्र दीर्घविधौ यथा। प्रतिदीव्ना। हलिचेति दकारादिकारस्य दीर्घे कर्तव्ये अल्लोपो न स्थानिवत्। जश्विधौ यथा। सग्धिश्चमे। अद भक्षणे क्तिन्। बहुळ छन्दसीति घसल् आदेश। 'घसिभसोर्हलि च' इत्युपधालोप। झलोझलीति सलोप। झषस्तथोरिति तकारस्य धत्वम्। 'झलाञ्जश् झशि' इति जश्त्वेन घकारस्य गकार। समाना ग्धि अदन सग्धि। समानस्य छन्दसीति सभाव। अत्र जश्त्वे कर्तव्ये उपधालोपो न स्थानिवत्। चर्विधौ यथा। जक्षतु। घसेर्लिटि अतुस्। द्वित्वम् 'हलादिश्शेष'। 'अभ्यासे चर्च' इति जश्त्वम्। 'कुहोश्चु' इति जकार। 'गमहन' इत्युपधालोप। 'खरि च' इति चर्त्वम्। ककार। 'शासिवसि इति' ष। अत्र चर्त्वे कार्ये उपधालोपो न स्थानिवत्। भाष्ये तु पूर्वत्रासिद्धे नस्थानिवदित्यवष्टभ्य द्विर्वचनसवर्णानुस्वारदीर्घजश्चर प्रत्याख्याता। किञ्च 'दीर्घादाचार्याणाम्' इत्युत्तर 'अनुस्वारस्य ययि परसवर्ण' 'वापदान्तस्य' 'तोर्लि' 'उदस्थास्तम्भ्वो पूर्वस्य' 'झयो होऽन्यतरस्याम्' 'शश्छोटि'

स्थानिवत् । इति स्थानिवद्भावनिषेध ।

## ५२ । झलां जश् झशि । (८-४-५३)

स्पष्टम् । इति धकारस्य दकार. ।

## ५३ । अदर्शनं लोपः । (१-१-६०)

प्रसक्तस्यादर्शनं लोपसंज्ञ स्यात् ।

## ५४ । संयोगान्तस्य लोपः । (८-२-२३)

संयोगान्तं यत्पदं तदन्तस्य लोप. स्यात् । इति यलोपे प्राप्ते । 'यणः प्रतिषेधो वाच्य ' (वा ४८०६) । 'यणो मयो द्वे वाच्ये' (वा ५०१८) ।

इति षट्सूत्रीपाठोत्तर 'झलाञ्जश् झशि' 'अभ्यासेचर्च' 'खरिच' 'वावसाने' 'अणोऽप्रगृह्य-स्यानुनासिक' इति पञ्चसूत्रीपाठ इति 'हलोयमाम्यमि' इति सूत्रस्थभाष्यसम्मत सूत्रक्रम । एवञ्च शिण्ड्ढीत्यत्र न परसवर्णप्रसक्ति । परसवर्णे कर्तव्ये षकारस्थानिकस्य जश्त्वस्यासिद्धत्वेन यय्परकत्वाभावादिति । तथापि सवर्णविधौ शिण्ड्ढीति नोदाहरणमित्यास्तान्तावत् । **इति स्थानीति** ॥ अनेन सूत्रेण सुध् य् इत्यत्र द्वित्वनिषेधे कर्तव्ये यकारस्य स्थानिवत्त्वनिषेध इत्यर्थ । एवञ्चाच्परकत्वाभावेन अनाचि चेति निषेधाभावात् धकारस्य द्वित्वन्निर्बाधमिति भाव । तथाच सुध् ध् य् इति स्थितम् । **झलाञ्जश् झशि । स्पष्टमिति** ॥ झला स्थाने जश् स्यात् झशि परत इति स्पष्टार्थकम् । तत्र न किञ्चिद्व्याख्यातव्यमस्ति । पदान्तरस्यानुवृत्त्यभावादित्यर्थ । **इति धकारस्येति** ॥ प्रथमधकारस्येत्यर्थ । **दकार इति** ॥ स्थानत आन्तर्यादिति भाव । सुद् ध् य् इत्यत्र यकारस्य सयोगान्तलोप शङ्कितु लोपसज्ञासूत्रमाह । **अदर्शनं लोपः** ॥ शब्दानुशासनप्रस्तावाच्छब्दविषयक श्रवणमिह दर्शन विवक्षितम् । दर्शनस्याभाव अदर्शनम् । अर्थाभावेऽव्ययीभाव । स्थानेऽन्तरतम इत्यत स्थान इत्यनुवर्तते । स्थान प्रसङ्ग इत्युक्तम् । शास्त्रतश्शब्दस्य कस्यचिच्छ्रवणप्रसङ्गे सति यदा श्रवणन्तत् लोपसज्ञ भवतीत्यर्थ । तदाह । **प्रसक्तस्येति** ॥ तत्र श्रवणाभावात्मके लोपे विहिते श्रवणार्थमुच्चारणमपि नास्तीत्यर्थाल्लभ्यते । प्रसक्तस्यकिम् । दाधि इत्यादौ क्विप अश्रवणात्मकलोपस्य प्रत्ययलक्षणमाश्रित्य ह्रस्वस्य पिति कृति तुक् माभूत् । **संयोगान्तस्य लोपः** ॥ पदस्येत्यधिकृतम् । सयोग अन्तो यस्येति विग्रह । संयोगान्तस्य पदस्य लोप इत्यन्वय । नच कृत्स्नपदस्य लोप । किन्तु अलोन्त्यस्येति परिभाषया तदन्तस्यैव । तदाह । **संयोगान्तमित्यादिना** ॥ अत्र अन्तग्रहण स्पष्टार्थमेव । सयोगस्य पदविशेषणतया येन विधिरित्येव तदन्तलाभात् । यत्तु सयोगावन्तौ यस्येति वि-ग्रहलाभार्थमन्तग्रहण । अन्यथा सुदृषत्प्रासाद इत्यत्र पकारात् पूर्वतकारस्य लोप स्यादिति । तन्न । सयोगसज्ञाया व्यासज्यवृत्तित्वात् प्रत्येकवृत्तित्वमभ्युपगम्य अन्तग्रहणप्रयोजनवर्णनस्य व्य-र्थत्वादिति शब्दरत्ने विस्तर इति । **यलोपे इति** ॥ सुध् य् इति यकारस्य अनेन सूत्रेण लोपे प्राप्ते तत्प्रतिषेध· आरभ्यते । **यणः प्रतिषेधो वाच्यः** ॥ यण सयोगान्तलोपप्रतिषेधो

'मय इति पञ्चमी यण इति षष्ठी' इति पक्षे यकारस्यापि द्वित्वम् । तदिह धकारयकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि । एकधमेकयम् । द्धिध द्धियम् । द्धिधमेकयम् । एकधं द्धियम् । सुद्ध्युपास्य. । मद्ध्वरि. । धात्त्रंश । लाकृति ।

---

वक्तव्य इत्यर्थ । अनेन वार्तिकेन यकारस्य सयोगान्तलोपो न भवतीति शेष । इद वार्तिक आकरे प्रत्याख्यातम् । अथात्र यकारस्य अच परत्वाभावादच्परकत्वाच्च अनाचिचेति द्वित्वाप्राप्तौ द्वित्वविधिमाह । **यणो मयो द्वे वाच्ये** ॥ अनेन वार्तिकेन यकारस्य द्वित्वमित्यन्वय । ननु यदि यण इति पञ्चमी मय इति षष्ठी तर्हि यण परस्य मयो द्वित्वमिति लभ्यते । प्रकृते च यकारो न यण पर, नापि मय् । अत कथमनेन वार्तिकेन तस्य द्वित्वमित्यत आह । **मय इतीति** ॥ पक्षे इत्यनेन उभयथा व्याख्यानमिष्टमिति सूचितम् । विनिगमनाविरहादिति भाव । अत्रापि वार्तिके यरोऽनुनासिक इत्यतो वाग्रहणमनुवर्तते । ततश्च फलितमाह । **तदिहेति** ॥ तदित्यव्ययम् । इयता सन्दर्भेण यत् प्रपञ्चित तेन इह सुध् य् इत्यत्र यकारधकारयो द्वित्वविकल्पाच्चत्वारि रूपाणि सम्पद्यन्ते इत्यर्थ । **एकधमेकयमिति** ॥ एक धकार यस्य तत् एकधम्, एव एकयमित्यपि । धकारयकारयोरुभयोरपि द्वित्वाभावे एकधकारमेकयकारञ्च प्रथम रूपमित्यर्थ । **द्धिधं द्धियमिति** ॥ द्वौ धकारौ यस्य द्धिधम् । एव द्धियमित्यपि । धकारयकारयोरुभयोरपि द्वित्वे द्वियकार द्विधकारञ्च द्वितीय रूपमित्यर्थ । **द्धिधमेकयमिति** ॥ धकारस्य द्वित्वे यकारस्य द्वित्वाभावे द्धिधमेकयञ्च तृतीय रूपमित्यर्थ । **एकधं द्धियमिति** ॥ धकारस्य द्वित्वाभावे च यकारस्य द्वित्वे एकध द्धियञ्च चतुर्थ रूपमित्यर्थ. । **सुद्ध्युपास्य इति** ॥ इह 'न भूसुधियो' इति निषेधस्तु न भवति । तस्य अजादौ सुपि विधानात् । इकोऽसवर्णे इत्यपि न । 'न समास' इति तन्निषेधात् । **मद्ध्वरिरिति** ॥ मधुर्नाम असुरविशेष । तस्यारिश्शत्रु मद्ध्वरि । हरिरित्यर्थ । अत्र धकारादुकारस्य स्थानत आन्तर्यात् यथासङ्ख्यपरिभाषया वा वकार । न चात्र वकारस्य दन्तस्थानाविक्यात् न स्थानसाम्यमिति वाच्यम् । यावत् स्थानसाम्यस्य सावर्ण्यप्रयोजकत्वेऽपि आन्तरतम्ये यत्किञ्चित्स्थानसाम्यस्यापि प्रयोजकत्वात् । अन्यथा चेता स्तोतेत्यादौ इकारादे एकाराद्यनापत्ते । **धात्त्रंश इति** ॥ अत्र तकारस्यैव द्वित्वम् । न तु रेफस्येत्यनुपदमेव वक्ष्यते अचोरहाभ्यामित्यत्र । **लाकृतिरिति** ॥ लृवर्णस्य आकृतिरिव आकृतिर्यस्येति विग्रह । अत्र आकारे परे लृवर्णस्य दन्तस्थानसाम्यात् लकार । न च दन्तस्थानसाम्यात् प्रथमातिक्रमे कारणाभावाच्च तस्य वकार एवास्तु । आन्तरतम्ये यत्किञ्चित्स्थानसाम्यस्य प्रयोजकताया मद्ध्वरिरित्यत्रोक्तत्वादिति वाच्यम् । अत्र हि चत्वारो यणो यवरला विधेया. । तत्र वकारविधिरुकारे ओष्ठस्थानसाम्यात् निस्सपत्नस्सावकाश । तत्र लकारस्य दन्तरूपस्थानभेदादप्राप्ते । लाकृतिरित्यत्र लृवर्णे तु वकारो लकारश्चेत्युभयमपि प्राप्तम् । अत्र शब्दपरविप्रतिषेधमाश्रित्य लकारविधि परत्वात् अपवादत्वाच्च वकारविधिं बाधते । यदि हि प्रथमातिक्रमे कारणाभावादत्रापि वकार एव स्यात् तर्हि लकारविधिर्निरवकाश एव स्यात् । अतोऽत्र लृवर्णस्य

## ५५ । नादिन्याक्रोशे पुत्रस्य । (८-४-४८)

पुत्रशब्दस्य न द्वे स्त आदिनीशब्दे परे आक्रोशे गम्यमाने । पुत्रादिनी त्वमसि पापे । 'आक्रोशे' किम् । तत्वकथने द्विर्वचनं भवत्येव । पुत्त्रादिनी सर्पिणी । 'तत्परे च' (वा ५०२१) । पुत्रपुत्रादिनी त्वमसि पापे । 'वा हत-जग्धयो' (वा ५०२२) । पुत्त्रहती–पुत्रहती । पुत्त्रजग्धी–पुत्रजग्धी ।

## ५६ । त्रिप्रभृतिषु शाकटायनस्य । (८-४-५०)

त्र्यादिषु वर्णेषु संयुक्तेषु वा द्वित्वम् । इन्न्द्र –इन्द्र । राष्ष्ट्रम्–रष्ट्रम् ।

---

लकार एवेत्यास्तान्तावत् । **नादिन्याक्रोशे** ॥ द्वे इत्यनुवर्तते । यर इति च । आक्रोशो निन्दा । आदिनीति डयन्त लुप्तसप्तमीकम् । आदिनीशब्दे परे पुत्रशब्दस्यावयवो य यर् तकार तस्य न द्वित्वम् । आक्रोशे गम्ये इत्यर्थ । तदाह । **पुत्रशब्दस्येत्यादिना** ॥ पुत्रश-ब्दावयवस्येत्यर्थ । **पुत्रादिनी त्वमसि पापे इति** ॥ पुत्रानत्तु शीलमस्या पुत्रादिनी । 'सुप्य-जातौ' इति णिनि । ऋन्नेभ्य इति ङीप् । हे पापे! त्व पुत्रादिनीत्यन्वय । पुत्रघातिनीत्यर्थ । ईदृशाक्रोशस्य प्रायेण स्त्रीष्वेव सम्भवात् । सूत्रे आदिनीति डयन्तमेव विवक्षितमिति हरदत्त । माधवोऽप्येवम् । अत्र उकारात् परस्य तकारस्य अनचि चेति प्राप्त द्वित्व निषिध्यते । रेफस्य तु न क्वापि द्वित्वप्रसक्तिरित्यनुपदमेव वक्ष्यते । **आक्रोशे किमिति** ॥ आक्रोश इत्यस्य कि प्रयो-जनमित्यर्थ । 'कि पृच्छाया जुगुप्सने' इत्यव्ययवर्गे अमर । एवमुत्तरत्राप्येवज्जातीयकेषु द्रष्ट-व्यम् । **तत्वकथन इति** ॥ यस्या पुत्रा स्वयमेव म्रियन्ते ता प्रति पुत्त्रादिनीति वस्तुस्थिति-कथने तु न द्वित्वनिषेध । तत्र निन्दाया अप्रतीतेरित्यर्थ । **तत्परे च** ॥ वार्तिकमेतत् । स आदिनीशब्द परो यस्मात् स तत्पर आदिनीशब्दपरके पुत्रशब्दे च परे पुत्रशब्दावयवस्य यरो न द्वित्वमित्यर्थ । **पुत्रपुत्रादिनी त्वमिति** ॥ पुत्रस्य पुत्रानत्तीति विग्रह । अत्र पूर्वस्य पुत्रशब्दस्य आदिनीशब्द परो न भवति । द्वितीयपुत्रशब्देन व्यवधानात् । अत पूर्वसूत्रेण अप्राप्ते द्वित्वनिषेधे इदमारब्धम् । **वा हतजग्धयोः** ॥ हतशब्दे जग्धशब्दे च परे पुत्रश-ब्दावयवस्य यरो द्वित्व वा स्यादित्यर्थ । **पुत्त्रहतीति** ॥ तकारद्वित्वे रूपम् । पुत्रो हतो ययेति विग्रह । 'अस्वाङ्गपूर्वपदात्' इति ङीष् इति केचित् । वस्तुतस्तु । जातिपूर्वादित्यस्य तत्रानुवृत्ते गौरादित्वात् ङीषिति युक्तम् । पुत्रघातसाहसस्य स्त्रीष्वेव सम्भवात् स्त्रीलिङ्गमेवोदा-हृतम् । **पुत्रहतीति** ॥ द्वित्वाभावे रूपम् । एव पुत्त्रजग्धी पुत्रजग्धीति अनचिचेति द्वित्वविकल्पे सिद्धे पुत्रशब्दस्य क्तान्ते चेत् हतजग्धयोरेव आक्रोश एवेति नियमार्थ-मिद वार्तिकमित्याहु । **त्रिप्रभृतिषु शाकटायनस्य** ॥ त्रिचतुरादिषु हल्षु सयुक्तेषु आद्यस्य मध्ये अच परस्य यर द्वित्व शाकटायनमते । मतान्तरे तु नेत्यर्थ । **इन्द्र इति**

## ५७ । सर्वत्र शाकल्यस्य । (८-४-५१)

द्वित्वं न । अर्के । ब्रह्मा ।

## ५८ । दीर्घादाचार्याणाम् । (८-४-५२)

द्वित्वं न । दात्रम् । पात्रम् ।

## ५९ । अचो रहाभ्यां द्वे । (८-४-४६)

अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । हर्य्यनुभवः । नह्यस्ति

## ६० । हलो यमां यमि लोपः । (८-४-६४)

हलः परस्य यमो लोपः स्याद्वा यमि । इति लोपपक्षे द्वित्वाभावपक्षे चैकयं

---

नकारस्य द्वित्वविकल्पः । राष्ट्रमित्यत्र षकारस्य द्वित्वविकल्पः । **सर्वत्र शाकल्यस्य** ॥ नेत्यनुवर्तते । यत्र यत्र द्वित्वं विहितं तत्र तत्र शाकल्यस्य ऋषेर्मते द्वित्वन्न भवतीत्यर्थः । **दीर्घादाचार्याणाम्** ॥ नेत्यनुवर्तते । दीर्घात् परस्य यरो द्वित्वं केषाञ्चिदाचार्याणाम्मते न भवति । मतान्तरे तु भवति । अनचिचेत्यत्र वाग्रहणमनुवर्तत इति नाज्झलाविति सूत्रे कैयटः । एवञ्च अनचिचेत्येव द्वित्वविकल्पसिद्धौ त्रिप्रभृतिष्वित्यादि सूत्रत्रयं नारम्भणीयमिति प्रौढमनोरमायां स्थितम् । एतत्सूत्रत्रयविरोधादनचिचेत्यत्र वाग्रहणन्नानुवर्त्यमिति युक्तं प्रतिभाति । **अचोरहाभ्यां द्वे** ॥ यरोऽनुनासिक इत्यतो यर इति षष्ठ्यन्तं वेतिचानुवर्तते । अच इति दिग्योगे पञ्चमी । पराभ्यामिति शेषः । रहाभ्यामित्यपि पञ्चमी । परस्येति शेषः । तदाह । **अचःपराभ्यामित्यादिना । हर्यनुभव इति** ॥ हरेरनुभव इति विग्रहः । हरि अनुभव इति स्थिते रेफादिकारस्य यण् । तस्य द्वित्वं । अथ हकारात् परस्योदाहरति । **नह्यस्तीति** ॥ नहि अस्तीति स्थिते हकारादिकारस्य यण् । तस्य द्वित्वं । इहोभयत्र यकारस्य अचः परत्वाभावादच्परकत्वात् यणः प्रतिषेध इति निषेधाच्च द्वित्वमप्राप्तं विधीयते । अत्र अनचिचेति रेफहकारयोर्द्वित्वन्न भवति । द्वित्वप्रकरणे रहाभ्यामिति रेफत्वेन हकारत्वेन च साक्षाच्छ्रुतेन निमित्तभावेन तयोः यर्शब्दबोधितकार्यभाक्त्वबाधात् । श्रुतानुमितयोश्श्रुतं बलीय इति न्यायात् । हर् य् य् अनुभव । नह् य् य् अस्ति इति स्थिते । उभयत्रापि प्रथमयकारस्य लोपविधिमाह । **हलोयमां यमि लोपः** ॥ झयो होऽन्यतरस्यामित्यतोऽन्यतरस्यामित्यनुवर्तते । तच्च विभक्तिप्रतिरूपकमव्ययं वार्थे वर्तते । यमामिति बहुत्वं प्रयोगबहुत्वापेक्षम् । एकैकस्मिन् प्रयोगे बहूनां यमामसम्भवात् । हल इति दिग्योगे पञ्चमी । परस्येति शेषः । तदाह । **हलः परस्य यम इत्यादिना** ॥ अनेन सूत्रेण उदाहरणद्वयेऽपि प्रथमयकारस्य लोपे सति एकयकाररूपं सम्पद्यते । लोपाभावपक्षे तु द्वियकाररूपं सम्पद्यते । ननु हलो यमामिति सूत्रमेतदर्थं नारम्भणीयम् । अचोरहाभ्यामिति यकारद्वित्वस्य वैकल्पिकतया द्वित्वे सति द्वियकाररूपस्य द्वित्वाभावे एकयकाररूपस्य च सिद्धेरित्याशङ्क्य नास्य सूत्रस्यात्र प्रयोजनमित्याह । **इति लोपेति** ॥

रूपं तुल्यम् । लोपारम्भफलं तु 'आदित्यो देवता अस्येत्यादित्यं हविः' इत्यादौ । 'यमां यमि' इति यथासंख्यविज्ञानान्नेह । माहात्म्यम् तादात्म्यम् ।

## ६१ । एचोऽयवायावः । (७-१-७८)

एच क्रमादय् अव् आय् आव् एते स्युरचि ।

## ६२ । तस्य लोपः । (१-३-९)

तस्येतो लोप स्यात् । इति यवयोर्लोपो न । उच्चारणसामर्थ्यात् । एवं च इत्संज्ञापीह न भवति । हरये । विष्णवे । नायक । पावक ।

**यस्मिन् विधिस्तदादावल्ग्रहणे ।**

**सप्तम्यन्ते अल्ग्रहणे विशेषणीभूते योविधिरारभ्यते स तदादौ ज्ञेय. । येनविधिरित्यस्यापवाद ।**

---

तर्हि किमस्य सूत्रस्य फलमित्यत आह । **लोपारम्भेति** ॥ 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्य' इत्यादित्यशब्दात् शेषार्थण्यन्तात् देवतार्थे ण्य । आदित्य य इति स्थिते । 'यस्येति च' इति यकारादकारस्य लोपे तकाराद्यकारस्य अनेन सूत्रेण लोप । तस्मिन् सत्येव आदित्यमित्येकयकार रूप सिद्ध्यति । नान्यथा । अत सूत्रारम्भो न विफल इति भाव । अत्र 'आपत्यस्य च तद्धितेऽनाति' इति लोपस्तु न । जाताद्यर्थकत्वेन आपत्यत्वाभावात् । अत्र त्वेतत् सूत्र न्याय्यत्वादुपन्यस्तमिति भाव । नन्वेवमपि महात्मनो भाव इत्यर्थे 'गुणवचनब्राह्मणादिभ्य' इति ष्यञि टिलोपे आदिवृद्धौ माहात्म्यमित्यत्रापि तकारान्मकारस्य लोपस्स्यात् । तस्य यम्त्वात् यकाररूपयम्परकत्वाच्चेत्यत आह । **यमामिति । यथासख्यविज्ञानादिति** ॥ विज्ञायते अनेनेति विज्ञान सूत्रम् । 'विज्ञान शिल्पशास्त्रयो' इत्यमर । यथासख्यसूत्रादित्यर्थ । तथाच मकारस्य मकारे परत एव लोपलाभात् यकारे परे न लोप इत्यर्थ । **एचोऽयवायावः** ॥ अय् च अव्च आय्च आव्चेति विग्रह । इको यणचीत्यतोऽचीत्यनुवर्तते । यथासख्यपरिभाषया एकारस्य अय्, ओकारस्य अव्, ऐकारस्य आय्, औकारस्य आव्, इति लभ्यते । तदाह । **एचः क्रमादिति** ॥ यथासख्यसूत्रभाष्यरीत्या तु अन्तरतमपरिभाषयैवात्र व्यवस्था ज्ञेया । इह इचोऽचि, यणयवायाव इत्येव सूत्रयितुमुचितम् । एतेष्वादेशेषु यकारवकारयोर्हलन्त्यमिति इत्सज्ञाया लोपमाशङ्कितुमाह । **तस्यलोपः** ॥ इत्सज्ञाप्रकरणान्ते इद सूत्रम् । तत्र तच्छब्दस्सन्निहितम् इत परामृशति । तदाह । **तस्येत इति** ॥ इत्यनेन सूत्रेण यवयोर्लोपो न शङ्कनीय इत्यर्थ । कुत इत्यत आह । **उच्चारणेति** ॥ यद्यत्र यवयोर्लोपस्स्यात् । तर्हि तयोस्सूत्रे अनुच्चारणमेव स्यात् । 'प्रक्षाळनाद्धि पङ्कस्य दूरादस्पर्शन वरम्' इति न्यायादिति भाव । तर्हि किमनयोरित्सज्ञयेत्यत आह । **एवञ्चेति** ॥ उक्तप्रकारेण लोपाभावे सति इत्सज्ञापि इह यकारे वकारे च नभवति । फलाभावादित्यर्थ । क्रमेणोदाहरति । **हरय इत्यादिना** ॥

## ६३ । वान्तो यि प्रत्यये । (६-१-७९)

यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्त गोर्विकारो गव्यम्। 'गोपयसोर्यत्' (सू १५३८)। नावा तार्यं नाव्यम्। 'नौवयोधर्म–' (सू १६४३) इत्यादिना यत्। 'गोर्यूतौ छन्दस्युपसंख्यानम्' (वा ३५४३)। 'अध्वपरिमाणे च' (वा ३५४४)। गव्यूति । 'ऊतियूति–' (सू ३२७४) इत्यादिना यूतिशब्दो

---

हरे ए विष्णो ए नै अक पौ अक इति स्थितेषु एकारादीना क्रमादयादय । **वान्तो यि प्रत्यये** ॥ यि इति सप्तम्यन्तम् । तेन यकारादाविति लभ्यते । यस्मिन्विधिस्तदादावल्ग्रहण इति वार्तिकात् । तत्र यस्मिन्निति सप्तम्यन्त विवक्षितम् । अलिति वर्णपर्याय । सप्तम्यन्ते वर्णग्रहणे यो विधि स तद्वर्णादौ ज्ञेय इति तदर्थ । येनविधिरित्यस्यायमपवाद । वकार अन्ते यस्य स वान्त । पूर्वसूत्रोपात्त अवादेश आवादेशश्च विवक्षित । तौ च कयोर्भवत इत्याकाक्षाया ओदौतोरित्यर्थाल्लभ्यते । पूर्वसूत्रे तयोरेव तदुभयस्थानित्वेन क्लृप्तत्वात् । तदाह । **यकारादावित्यादिना । गव्यमिति** ॥ गो य इति स्थिते । ओकारस्य अच्परकत्वाभावात् एचोऽयवायाव इत्यप्राप्ते अवादेशोऽत्र विधीयते । अस्तिचात्र य इत्यस्य प्रत्ययत्वमित्याह । **गोपयसोर्यदिति** ॥ अनेन सूत्रेण गोशब्दात् विकारार्थे यत्प्रत्यय इति शेष । **नाव्यमिति** ॥ नौ य इति स्थिते औकारस्य अच्परकत्वाभावात् एचोऽयवायाव इति अप्राप्ते वचनमिदम् । अस्तिचात्र य इत्यस्य प्रत्ययत्वमित्याह । **नौ वय इति** ॥ गव्यन्नाव्यमित्यत्र लोपश्शाकल्यस्येति 'हलि सर्वेषाम्' इति च वकारस्य लोपो न भवति । तयो पदान्तविषयत्वात् । इह च भत्वेन पदत्वबाधात् । **गोर्यूतौ छन्दस्युपसङ्ख्यानम्** ॥ छन्दसि वेदे यूतिशब्दे परे गोशब्दावयवस्य ओकारस्य स्थाने अव् इति वान्तादेशो भवतीति उपसख्यान अधिकवचन कर्तव्यमिति सूत्रकारश्शिक्ष्यते । 'आनोमित्रावरुणा घृतैर्गव्यूतिमुक्षतम्' इत्युदाहरणम् । गव्यूति । गोप्रचारभूमि । गावो यूयन्ते मिश्रयन्तेऽस्यामित्यधिकरणे यु धातो क्तिनिति वेदभाष्ये भट्टभास्कर । अत्र यूतिशब्दस्य प्रत्ययत्वाभावात्तस्मिन् परत 'वान्तो यिप्रत्यय' इत्यप्राप्तौ वचनमिदम् । **अध्वपरिमाणे च** ॥ मार्गपरिमाणविशेषे गम्येऽपि यूतिशब्दे परे गोशब्दावयवस्य ओकारस्य अव् इति वान्तादेशस्य उपसख्यान कर्तव्यमित्यर्थ । लोकेऽपि प्राप्त्यर्थमिदम् । यद्यपि पूर्ववार्तिक वैदिकप्रक्रियायामेव उपन्यसनीयम् । तथाप्यत्र अनुवृत्तिबोधसौकर्यार्थमिह तदुपन्यास । **गव्यूतिरिति** ॥ यावति गोशब्द यूयते मिश्रयते श्रूयते तावानध्वा गव्यूति, क्रोशयुगम्। 'गव्यूतिस्त्री क्रोशयुगम्' इत्यमर । युधातोर्भावकरणे क्तिन् । कथमिह युधातोर्दीर्घ इत्यत आह । **ऊतियूतीति** ॥ निपातनादेव दीर्घ इति भाव । सिद्धप्रक्रियस्य निर्देशो निपातनम् । ननु गव्यन्नाव्यमित्यत्र भत्वेन पदत्वबाधात् 'लोपश्शाकल्यस्य' इति 'हलिसर्वेषा इति च वलोपाभावेऽपि गव्यूतिरित्यत्र लोप स्यात् । अन्तर्वर्तिनी विभक्तिमाश्रित्य पदत्वात् यूतिशब्दस्य यजादिस्वादिप्रत्ययत्वाभावेन तस्मिन् परतो भत्वाभावाच्चेत्यत आह । **वान्त इत्यत्रेत्यादि** ॥ वान्तो यिप्रत्यय इत्यत्र वकारात् गोर्यूतावित्यत्र छकाराद्वा पूर्वभागे वकार प्रश्लिष्यत इत्यन्वय । तर्हि

निपातित । 'वान्त इत्यत्र वकारात्, 'गोर्यूतौ' इत्यत्र छकाराद्वा, पूर्वभागे 'लोपो व्यो –' (सू ८७३) इति लोपेन वकार प्रश्लिष्यते । तेन श्रूयमाणवकारान्त आदेश स्यात् । वकारो न लुप्यत इति यावत् ।

## ६४ । धातोस्तन्निमित्तस्यैव । (६-१-८०)

यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशस्तर्हि तन्निमित्तस्यैव । लव्यम् ।

---

व् वान्त इति, व् छन्दसीति च वकार कुतो न श्रूयत इत्यत आह । **लोपो व्योरिति । लोपेनेति** ॥ अन्तर्हित इति शेष । ननु प्रश्लेषे सति किमायातमित्यत आह । **तेनेति** ॥ वान्तोयीतिसूत्रे वकारात् प्राक् व् इति प्रश्लिष्यमाण वान्तस्य विशेषणम् । विशेषणत्वाच्च तदन्तविधौ सति वकारान्त इति लभ्यते । तत्र वान्तस्य पुनर्वान्तवचनसामर्थ्यात् श्रूयमाणवकारवान् वान्त आदेशस्स्यादिति लभ्यते । गोर्यूताविल्यत्र च इदमेव वान्तग्रहणमनुवर्तत इति तत्रापि श्रूयमाणवकारवान् वान्तादेश इति लभ्यते । गोर्यूताविल्यत्र छकारात् प्राक् व् इति प्राश्लिष्यमाणमपि पूर्वसूत्रादनुवृत्तस्य वान्त इत्यस्य विशेणमिति तदन्ताविधिना वान्तत्वलाभे वान्तस्य पुनर्वान्ततावचनसामर्थ्यात् श्रूयमाणवकारवान् वान्त इति लभ्यत इत्यर्थ । नन्वेतावता गव्यूतिरित्यत्र अवादेशे वकारस्य श्रूममाणत्वलाभेऽपि लोपशङ्का न परिहृतेत्यत आह । **वकारो न लुप्यत इति । यावदिति** ॥ वकारस्य श्रूयमाणत्ववचन वकारो न लुप्यत इत्यर्थे पर्यवसन्नमित्यर्थ । अश्रवणस्यैव लोपशब्दार्थत्वादिति भाव । यद्यपि वान्तो यीति सूत्रे वकारप्रश्लेषस्य तदुदाहरणे गव्यन्नाव्यमित्यत्र प्रयोजनन्नास्ति । तत्र भत्वेन पदत्वस्य बाधेन उक्तलोपस्याप्राप्ते । लव्यमित्यादौ स्वत एव पदत्वाभावाल्लोपस्याप्राप्ति । गामिच्छति गव्यतीत्यत्र क्यजन्तेऽपि वकारस्य न लोपप्रसक्ति । 'न क्ये' इति नियमेन तत्र पदत्वाभावात् । तथाऽपि गोर्यूताविति वार्तिके तदनुवृत्तौ गव्यूतिरित्यत्र प्रयोजनमस्त्येव । एवञ्च वार्त्तिक एव तत्प्रश्लेष उचित । एतस्मादेवास्वरसात् छकाराद्वेत्युक्तम् । वस्तुतस्तु । वकारप्रश्लेषोऽनुपपन्न । तथा सति सूत्रे वार्तिके च प्रश्लिष्टस्य तस्य श्रवणप्रसङ्गात । न च लोपोव्योरितिलोपात्तदश्रवणमिति वाच्यम् । वकारलोपस्य उदाहरणाभावाद्वकारग्रहणन्नकर्तव्यमिति लोपो व्योरिति सूत्रस्यभाष्यविरोधात् । अतोऽत्र प्रश्लिष्टवकारस्य छान्दस एव लोपो वर्णनीय । प्रक्रियाप्रकाशे तु सञ्ज्ञापूर्वको विधिरनित्य इति वचनात् । गव्यूतिरित्यत्र न वकारलोप इत्युक्तम् । अन्येतु इको गुणवृद्धी इति सूत्रे अतो ल्रान्तस्येत्यत्र लुप्तनिर्दिष्टो वकार इति भाष्यप्रामाण्यात् क्वचिदस्ति वकारलोप इत्याहु । ननु ओयते औयत इत्यत्रापि ओकारस्य औकारस्य च वान्तो यीति वान्तादेशस्स्यादित्याशङ्क्य वान्तो यीति सूत्रन्नियमयति । **धातोस्तन्निमत्तस्यैव** ॥ एच इति, वान्तो यि प्रत्यय इति, चानुवर्तते । स यादिप्रत्यय निमित्त यस्य स तन्निमित्त । यादिप्रत्यये परे धातोरेचो भवन् वान्तादेश यादिप्रत्ययनिमित्तकस्यैव एचो भवति । नान्यस्येत्यर्थ. । तदाह । **यादौ प्रत्यय इत्यादिना । लव्यमिति** ॥ लूञ् । छेदने । अचो यत्, सार्वधातुकार्द्धधातुकयोरित्यूकारस्य गुण ओकार. । तस्य धात्ववयवत्वात्

अवश्यलाव्यम् । 'तन्निमित्तस्यैव' इति किम् । ओयते । औयत ।

६५ । क्षय्यजय्यौ शक्यार्थे । (६-१-८१)

यान्तादेशनिपातनार्थमिदम् । क्षेतुं शक्यं क्षय्यम् । जेतुं शक्यं जय्यम् । 'शक्यार्थे' किम् । क्षेतुं जेतु योग्य क्षेय पाप जेयं मन ।

---

यादिप्रत्ययनिमित्तकत्वाच्च वान्तादेश । **अवश्यलाव्यमिति**॥ 'ओरावश्यक' इति लूञो ण्यत्। अचो ञ्णितीत्यूकारस्य वृद्धि औकार । अवश्यमित्यव्ययम्। मयूरव्यंसकादित्वात्समास । 'लुम्पेदवश्यम कृत्य' इति मलोप । अत्र औकारस्य धात्ववयवत्वात् यादिप्रत्ययनिमित्तकत्वाच्च वान्तादेश । ननु लव्यमवश्यलाव्यमित्यत्र वान्तो यीत्येव वान्तादेशस्सिद्ध । अतस्तन्निमित्तस्यैवेति नियमार्थमिद सूत्रमिति स्थिति । तन्नियमविधे किं प्रयोजनमिति पृच्छति । तन्निमित्तस्यैवेति किमिति । नियमस्य किं प्रयोजनमित्यर्थ । **ओयते इति** ॥ वेञ् तन्तुसन्ताने कर्मणि ल । भावकर्मणोरित्यात्मनेपदम्। यक्। वचिस्वपियजादीनामिति वकारस्य सम्प्रसारणम् । उकार । पूर्वरूपम् । अकृत्सार्वधातुकयोरित्युकारस्य दीर्घ । आडा सह उकारस्य आद्गुण इति गुण ओकार । तस्य परादिवद्भावेन धात्ववयवत्वेऽपि यादिप्रत्ययनिमित्तकत्वाभावात् न वान्तादेश । न्वत्र न धातुलोपसूत्रस्थभाष्यरीत्या आद्गुण इति गुणस्य ओकारस्य पदद्वयापेक्षत्वेन बहिरङ्गतया वान्तादेशे कर्तव्ये असिद्धत्वादोकाराभावान्नवान्तादेशप्रसक्तिरित्यस्वरसादाह । **औयतेति**॥ वेञ केवलात् कर्मणि लङ् । आत्मनेपदादि पूर्ववत् । आडजादीनामित्याट्। आटश्चेति वृद्धि औकार । तस्य परादिवद्भावेन धात्ववयवत्वेऽपि यादिप्रत्ययनिमित्तकत्वाभावान्नवान्तादेश ।अत्र वृद्धेर्बहिरङ्गत्वम् । पदद्वयापेक्षत्वाभावात् । 'सिद्धे सत्यारम्भो नियमार्थ' इति न्यायेन नियमविधिसिद्धे । तन्निमित्तस्यैवेत्येवकारस्तु विपरीतनियमव्यावृत्त्यर्थ । एवकाराभावे हि यादिप्रत्ययनिमित्तकस्य चेदेचो वान्तादेश तर्हि धातोरेवैच इत्यपि नियम प्रतीयेत। तथा च बाभ्रव्य इत्यत्र वान्तादेशो न स्यात् । बभ्रोरपत्य बाभ्रव्य । मधुबभ्र्वोर्ब्राह्मणकौशिकयोरिति यञ् । ओर्गुण इत्युकारस्य गुण ओकार । तस्य यादिप्रत्ययनिमित्तकस्य धात्ववयवत्वाभावात् वान्तादेशो न स्यात्। प इष्टनियमावधारणार्थ तन्निमित्तस्यैवेत्येवकार । **क्षय्यजय्यौ शक्यार्थे**॥ शक्यार्थे क्षय्यजय्यशब्दौ वाचकतया वर्तेते इत्यर्थ । ननु किमपि कार्यं विधेयमत्र न दृश्यते इत्यत आह । **यान्तेति** ॥ प्रातिस्विकविधिं विना सिद्धप्रक्रियस्य शब्दस्वरूपस्य निर्देशो निपातनम् । ततश्च शक्यार्थके यादौ प्रत्यये परे । क्षि क्षये जि जये इति धात्वोरेच अय् इति यान्तादेशस्यास्य विधानमत्र फलति । शक्यार्थे क्षिज्योर्यान्त इति प्रातिस्विकविधौ गौरवादेवन्निपातनमित्येव । **क्षय्यमिति** ॥ कृत्या इत्यधिकारे क्षिधातोरचो यदिति यत् प्रत्यय । स च 'शकि लिङ् च' इति शक्यार्थ । शक्यार्थे लिङ् स्यात् चात् कृत्या इति तदर्थ । सार्वधातुकार्धधातुकयोरितीकारस्य गुण एकार । तस्याच्परकत्वाभावादप्राप्त अयादेश अत्र निपात्यते। जय्यमित्यपि एवं वत् । **शक्यार्थे किमिति** ॥ शक्यार्थ इत्यस्य किं प्रयोजनमिति प्रश्न । क्षेतुमित्यादि क्षेतु योग्य क्षेय पापम् । जेतु योग्य जेयम्मन इत्यन्वयः। अर्हे कृत्यतृचश्चेति यत्

## ६६। क्रय्यस्तदर्थे। (६-१-८२)

तस्मै प्रकृत्यर्थायेदं तदर्थम्। क्रेतार क्रीणीयुरिति बुद्ध्या आपणे प्रसारितं क्रय्यम्। क्रेयमन्यत्। क्रयणार्हमित्यर्थ।

## ६७। लोपः शाकल्यस्य। (८-३-१९)

अवर्णपूर्वयो पदान्तयोर्यवयोर्वा लोपोऽशि परे 'पूर्वत्रासिद्धम्। (सू १२) इति लोपशास्त्रस्यासिद्धत्वान्न स्वरसन्धि। हर [illegible]हि—हरयेहि। विष्ण

---

स च न शक्यार्थक इति नात्र यान्तादेश इत्यर्थ **क्रय्यस्तदर्थे॥** [illegible]दमपि यान्तादेशनिपातनार्थम्। तदर्थशब्द व्याचष्टे। **तस्मा इति॥** क्रय्यशब्दे य क्रीञ्[illegible]तु यत्प्रत्ययप्रकृतिभूत तस्य योऽर्थ अभिधेय द्रव्यविनिमयरूप क्रय स प्रकृत्यर्थ तच्छब्देन विवक्षित। तस्मै इद तदर्थ क्रयार्थ वस्तु। तथाच क्रयार्थे वस्तुनि गम्ये क्रीञ्धातोर्यादौ त्यये परे इति फलति। यान्त क्रीजस्तदर्थ इति विधौ गौरवान्निपातनमाश्रितम्। क्रियार्थत्वञ्चा फलोपाधान विवक्षितमित्याह। **क्रेतार इत्यादि क्रय्यमित्यन्तम्॥** योग्यतामात्रग्रहणे तु [illegible]ार्थ इत्यव्या[illegible]वर्तक स्यादिति भाव। क्रीज कर्मणि 'अचो यत्' इति यत्। सार्वधातुकेति गुण[illegible]कार। अत्र एकारस्य अच्परकत्वाभावादनेन अयादेशाविधि। **क्रेयमन्यदिति॥** गृहा[illegible] भोजनाद्यर्थ सगृहीत धान्यादीत्यर्थ। 'अर्हे कृत्यतृचश्च' इति यत्। अत्र अयादेशो न भवति फलोपधानस्य क्रयार्थत्वस्य तत्राभावादित्यर्थ। हरे एहि, विष्णो इह, श्रियै उद्यत, गुरौ उत्क, इत्यत्र एचा क्रमेण अयवायावादेशेषु कृतेषु यकारवकारयोर्वैकल्पिक लोप विधत्ते। **लोपःशाकल्यस्य॥** 'भो भगो' इत्यत अपूर्वस्येति अशीति चानुवर्तते। व्योर्लघुप्रयत्नेत्यत व्य्ये त्यनुवर्तते। वकारयकारयोरित्यर्थ। अपूर्वस्येति च व्योरित्यस्य विशेषणम्। अवर्ण पूर्व यस्मात् स अपूर्व। अपूर्वस्य वस्य यस्य चेति प्रत्येकमन्वयाभिप्रायमेकवचनम्। पदस्येत्यधिकृत अवर्णपूर्वकाभ्या यकारवकाराभ्या विशेष्यते। विशेषणत्वाच्च व्योरिति तदन्तता लभ्यते ततश्च अवर्णपूर्वो य वकारो यकारश्च तदन्तपदस्य लोप स्यात् अशि परत इत्यर्थ। अलोऽन्त्यपरिभाषया तादृशपदान्तस्येति लभ्यते। शाकल्यग्रहणान्मतान्तरे न भवतीति गम्यते। ततश्च [illegible]तमाह। **अवर्णपूर्वयोरित्यादिना॥** व्योरित्यनुवृत्तावपि वर्णसमाम्नाये यकारस्य प्राथम्याद्यवयोरित्युक्तम्। नच शाकल्यवश्यानामेव पुरुषाणामेतल्लोपानुसरण नान्येषामिति पुरुषभेद व्यवस्थार्थमेव शाकल्यग्रहण कुतो न स्यादिति वाच्यम्। 'न वेति विभाषा' इति सूत्रभाष्ये चार्यदेशशीलेन च तद्विषयतेति प्रस्तुत्य 'इको ह्रस्वो ड्यो गालवस्य' प्राचामवृद्धादित्यादौ [illegible]वाद्याचार्यग्रहण प्राचामुदीचामित्यादिदेशविशेषग्रहणञ्च अविशेषेण विकल्पार्थमेव। ननु तत्तद्यतत्तद्देशभेदेन प्रयोगव्यवस्थार्थमिति सिद्धान्तितत्वात्। ननु हरे एहीत्यत्र अयादेशे यकारस्य लोपे सति 'ओमाङोश्च' इति पररूप स्यात्। विष्णो इह, श्रियै उद्यत, गुरौ उत्क, इत्यत्र अवायावा[illegible]षु वकारयकारलोपे आद्गुण इति गुणस्स्यादित्यत आह। **पूर्वत्रेति॥** वकारयकारयोर्लोपस्यासिद्धत्वेन ताभ्या

इह—विष्णविह । श्रियाउद्यत—श्रियायुद्यत । गुराउत्क—गुरावुत्क । 'कानि सन्ति' 'कौ स्त' इत्यत्रास्तेरल्लोपस्य स्थानिवद्भावेन यणावादेशौ प्राप्तौ 'न पदान्त—' (सू ५१) इति सूत्रेण पदान्तविधौ तन्निषेधान्न स्त ।

## ६८ । एकः पूर्वपरयोः । ६-१-८४ ।

इत्यधिकृत्य ।

## ६९ । आद्गुणः ६-१-८७ ।

अवर्णादचि परे पूर्वपरयोरेको गुण आदेश स्यात्संहितायाम् । उपेन्द्र । रमेश । गङ्गोदकम् ।

---

व्यवहिततया अच्परकत्वाभावादाशङ्कित अन्सन्धिर्नभवतीत्यथ । तदेवमिक्सन्धिरेच्सन्धिश्च निरूपित । तदुभयत्रातिप्रसङ्गमाशङ्क्य समाधत्ते । **कानीत्यादिना** ॥ यद्यपि तथापीत्यध्याहार्यम् । कानि सन्ति, कौ स्त, इत्यत्र यद्यपि यणावादेशौ प्राप्तौ । तथापि न भवत इत्यन्वय । नन्वत्र इकारौकारयोस्सकारपरकत्वादच्परकत्वाभावात् कथ यणावो प्राप्तिरित्यत आह । **अस्तेरल्लोपस्य स्थानिवद्भावेनेति** ॥ असधातोरादादिकाल्लटि प्रथमपुरुषबहुवचने सन्तीति रूपम् । प्रथमपुरुषद्विवचने तु स्त इति रूपम् । उभयत्रापि 'श्नसोरल्लोप' इति धात्वादेरकारस्य लोप इति स्थिति । तत्र अल्लोपस्य स्थानिवत्त्वेनाच्त्वादिकारौकारयोरच्परकत्वाद्यणावादेशौ प्राप्नुत इत्यर्थ । नच स्थानिवदादेशो ऽनल्विधाविति स्थानिवद्भावोऽत्र न सम्भवति । अल्लोपस्य स्थानिभूतो य अकार त परनिमित्तत्वेनाश्रित्य प्रवर्तमानयोर्यणावादेशविध्यो स्थान्यलाश्रयत्वादिति वाच्यम् । 'अच परस्मिन् पूर्वविधौ' इति स्थानिवद्भावोपपत्ते । अल्लोपस्य किडिति परनिमित्ते विधीयमानस्य परनिमित्तकाजादेशतया तत्स्थानाभूतादकारात् पूर्वत्वेन दृष्टयोरिकारौकारयोर्यणावादेशविधौ अच परस्मिन्निति प्रवृत्तेरिति भाव । तर्हि कुतोऽत्र यणावादेशौ न भवत इत्यत आह । **नपदान्तेति सूत्रेण पदान्तविधौ तन्निषेधादिति** ॥ पदान्तभूतेकारौकारयोस्स्थाने भवतोर्यणावादेशयो पदचरमावयवतया तयो कर्तव्ययो परनिमित्तकस्याजादेशस्याल्लोपस्य स्थानिवत्त्वनिषेधादित्यर्थ । अथ एकादेशसन्धि निरूपयितुमाह । **एकः पूर्वपरयोः । इत्यधिकृत्येति** ॥ पदद्वयात्मकमिद सूत्रम् । उत्तरत्रानुवृत्त्यर्थं पठित्वा कतिपयसन्धय विधास्यन्त इत्यर्थ । **आद्गुणः** ॥ आदिति पञ्चमी नतु तपरकरणम् । एक पूर्वपरयोरित्यधिकृतम् । तदाह । **अवर्णादचीत्यादिना । उपेन्द्र इति** ॥ उप इन्द्र इति स्थिते पकारादकारस्य तस्मादिकारस्यच पूर्वपरयो कण्ठतालुस्थानकयो तथाविध एको गुण एकार । आन्तरतम्यात् । अथ प्रत्याहारेषु स्ववाच्यवाच्येषूक्ता लक्षणा स्मारयितु दीर्घविषयोदाहरणमाह । **रमेश इति** ॥ रमा ईश इति स्थिते आकारस्य ईकारस्य च स्थाने पूर्ववदेको गुण एकार । **गङ्गोदकमिति** ॥ गङ्गा उदकमिति स्थिते आकारस्य उकारस्य च कण्ठोष्ठस्थानकयो तथाविध एको गुण ओकार । कृष्णर्द्धिरित्यत्र कृष्ण ऋद्धिरिति स्थिते आद्गुण इति प्राप्तम् । अत

## ७० । उरण्रपरः । (१-१-५१) ।

'ऋ इति त्रिंशत संज्ञा' इत्युक्तम्, तत्स्थाने योऽण् स रपर सन्नेव प्रवर्तते । तत्रान्तरतम्यात् 'कृष्णर्द्धि' इत्यत्र अर् । 'तवल्कार' इत्यत्र अल् । अचो रहाभ्याम्—' (सू ५९) इति पक्षे द्वित्वम् ।

## ७१ । झरो झरि सवर्णे । (८-४-६५) ।

हल परस्य झरो लोपो वा स्यात्सवर्णे झरि । द्वित्वाभावे लोपे सत्येकधम् । असति लोपे, द्वित्वलोपयोर्वा, द्विधम् सति द्वित्वे लोपे चासति त्रिधम् ।

---

अकार ऋकारश्चेति द्वौ स्थानिनौ। तयो अकार एकारौकारश्चेति त्रयोऽपि गुणा प्रसक्ता । अकारेण स्थानिना त्रयाणामपि कण्ठस्थानसाम्याविशेषात्। ऋकारेण स्थानिना तु न कस्यापि स्थानसाम्यम्। तस्य मूर्धस्थानकत्वात् । एतेषाञ्च तदभावात् । एव तव ऌकार इति स्थिते त्रयो गुणा प्रसक्ता । अकारेण तेषां कण्ठस्थानसाम्याविशेषात् ऌकारेण तु स्थानिना न कस्यापि स्थानसाम्यम् । तत्र कतमो गुणो भवतीत्याकाङ्क्षायामिदमारभ्यते । **उरण्रपर । इत्युक्तमिति** ॥ अणुदित्सूत्र इति शेष । उ इति ऋ इत्यस्य षष्ठ्येकवचनम् । 'षष्ठी स्थाने' इति परिभाषया स्थाने इति लभ्यते । अनुवादे तत्परिभाषानुपस्थितावपि स्थानेग्रहण ततोऽनुवर्तते । तदाह। **तत्स्थाने योऽणिति** ॥ स्थानेऽन्तरतम इत्यतोऽपि स्थानेग्रहणमनुवर्तते। स्थान प्रसङ्ग इत्युक्तम् । प्रसङ्गावस्थायामित्यर्थो विवक्षित । तदाह । **रपरस्सन्नेव प्रवर्तत इति** ॥ अत्र र इति प्रत्याहारो विवक्षित । ततश्च रेफशिरस्को लकारशिरस्कश्च प्रवर्तत इति लभ्यते । तयोर्व्यवस्था दर्शयति । **तत्रेति** ॥ रेफलकारशिरस्कयोर्मध्ये कृष्णर्द्धिरित्यत्र अर् । तवल्कार इत्यत्र अलित्यन्वय । कुत इय व्यवस्थेत्यत आह । **आन्तरतम्यादिति** ॥ त्रिषु गुणेषु प्रसज्यमानेषु अकारस्य अणो रेफलकारशिरस्कतया तस्य अर् अल् इत्येवमात्मकस्य, अकारांशे स्थानीभूतेन अकारेण, रेफांशे ऋकारेण, लकारांशे ऌकारेण च, स्थानसाम्यादकारऋकारयोस्स्थाने अरेव भवति । अकारऌकारयो स्थाने अलेव भवति । एकारौकारौ तु गुणौ न भवत एव । तयो ऋकारेण ऌकारेण च स्थानसाम्याभावादित्यर्थ । नच एकार ओकारश्च कथ रपरौ न स्यातामिति वाच्यम् । पूर्वेणैव णकारेण ह्यत्राण् गृह्यते । प्रशास्तृणामित्यादिनिर्देशादित्यलम् । **पक्षे द्वित्वमिति** ॥ ऋध धातो क्तिनि झषस्तथोरिति तकारस्य धत्वे ऋद्धिरिति द्विधकार रूप स्वाभाविकम् । तत्र अरादेशे रेफात् परस्य धकारस्य अचो रहाभ्यामिति कदाचिद्द्वित्वमित्यर्थ । **झरो झरि सवर्णे** ॥ झयो होऽन्यतरस्यामित्यत अन्यतरस्यामित्यनुवर्तते। हलो यमामित्यत हल इति, लोप इति, चानुवर्तते । तदाह । **हलः परस्येत्यादिना** ॥ तदिह रूपत्रय सम्पन्नमित्याह । **द्वित्वाभाव इत्यादिना** ॥ रेफात् परस्य ऋध् इति धात्वन्तस्य धकारस्य अचो रहाभ्यामिति द्वित्वाभावे सति झरो झरीति लोपे च सति एकधकार रूपमित्यर्थ । **असतीति** ॥ द्वित्वाभावे इत्यनुकृष्यते । तस्यैव ऋधेर्धकारस्य द्वित्वाभावे

कृष्णर्धि —कृष्णर्द्धि.—कृष्णर्द्द्धि । 'यण इति पञ्चमी मय इति षष्ठी' इति पक्षे ककारस्य द्वित्वम्। लस्य तु 'अनाचि च' (सू ४८) इति। तेन 'तवल्कार:' इत्यत्र रूपचतुष्टयम्।

द्वित्व लस्यैव कस्यैव नोभयोरुभयोरपि।
तवल्कारादिषु बुधैर्बोद्ध्यं रूपचतुष्टयम्॥

## ७२। वृद्धिरेचि। (६-१-८८)

आदेचि परे वृद्धिरेकादेश स्यात्। गुणापवाद। कृष्णैकत्वम्। गङ्गौघ। देवैश्वर्यम्। कृष्णौत्कण्ठ्यम्।

## ७३। एत्येधत्यूठ्सु। (६-१-८९)।

---

लोपे च असति द्विधकार रूपम्। तथा तस्यैव ऋधेर्धकारस्य द्वित्वे लोपे च सति द्विधकारमेव रूपमित्यर्थ। **सतीति**॥ तस्यैव ऋधेर्धकारस्य द्वित्वे सति लोपे च असति त्रिधकार रूपमित्यर्थ। यद्यपि द्विधपक्षे प्रथमधकारस्य त्रिधपक्षे मध्यमधकारस्य च 'झला-ञ्जश् झशि' इति जश्त्वेन दकारो भवति। तथापि प्रक्रियाभिप्रायेण भूतपूर्वगत्या वा द्विधत्व त्रिध-त्वञ्चेति न दोष। अथ तवल्कार इत्यत्राह। **यण इति**॥ यण परस्य मयो द्वित्वमिति व्याख्याने ककारस्य द्वित्व लकारस्य तु अनचि चेति द्वित्वमित्यर्थ। **तेनेति**॥ लकारककारयो-र्द्वित्वविकल्पेनेत्यर्थ। **द्वित्वं लस्यैवेति**॥ लकारस्य द्वित्वे ककारस्य द्वित्वाभावे च सति द्विलकारमेकककारञ्च प्रथम रूपमित्यर्थ। **कस्यैवेति**॥ ककारस्य द्वित्वे लकारस्य द्वित्वाभावे द्विककारमेकलकारञ्च द्वितीय रूपमित्यर्थ। **नोभयोरिति**॥ लकारककारयोरुभयोरपि द्वित्वा-भावे एकलकारमेकककार तृतीय रूपमित्यर्थ। **उभयोरपीति**॥ लकारककारयोरुभयोरपि द्वित्वे द्विलकार द्विककारञ्चतुर्थ रूपमित्यर्थ। **तवल्कारादिष्विति**॥ आदिना ममल्का-रादिसङ्ग्रह। **वृद्धिरेचि**॥ आद्गुण इत्यत आदिति पञ्चम्यन्तमनुवर्तते। एक पूर्वपरयो-रित्यधिकृतम्। तदाह। **आदेचीत्यादिना। गुणापवाद इति**॥आद्गुण इति प्राप्तावेतदा-रम्भ इति भाव। **कृष्णैकत्वमिति**॥ कृष्णस्य एकत्वमिति षष्ठीसमास। 'पूरणगुण' इति निषेधस्त्वनित्य इति तत्रैव मूले वक्ष्यते। कृष्णेति सम्बुद्ध्यन्त पृथक्पदमित्यन्ये। अत्र अकारस्य एकारस्य च कण्ठतालुस्थानकस्य स्थाने तथाविध ऐकार एकादेश। गङ्गा ओघ इति स्थिते आकारस्य ओकारस्य च कण्ठोष्ठस्थानकस्य स्थाने तथाविध औकार। एव देवैश्वर्यम्। कृष्णौ-त्कण्ठ्यमित्यत्रापि। वस्तुतस्तु सङ्ख्यादिशब्दा न गुणवचना इति तत्रैव वक्ष्याम। **एत्येध-त्यूठ्सु**॥ एतिश्च एधतिश्च ऊठ् चेति विग्रह। एतीति एधतीति च 'इक्श्तिपौ धातुनिर्देशे' इति श्तिपा निर्देश। इण् गताविति, एध वृद्धाविति च, धातू विवक्षितौ। एचीत्यनुवर्तते। 'यस्मि-न्विधि' इति तदादिग्रहणम्। एजादाविति लभ्यते तच्च एत्येधत्योरेव विशेषणम्। न तु ऊठ। असम्भवात्। एक पूर्वपरयोरित्यधिकृतम्। आद्गुण इत्यत आदिति पञ्चम्यन्तमनुवर्तते। तदाह।

**अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेश स्यात् । पररूपगुणापवाद । उपैति । उपैधते । प्रष्ठौह । 'एजाद्यो' किम् । उपेत । माभवान्प्रे-**

---

**अवर्णादित्यादिना । उपैतीति** ॥ इण् धातोर्लट् । तिप् शप् लुक् 'सार्वधातुक' इति इकारस्य गुण एकार । उप एतीति स्थिते अनेन वृद्धि । **उपैधत इति** ॥ एधधातोर्लट् आत्मनेपद तादेश शप् 'टित आत्मनेपदानाम्' इत्येत्वम् । उप एधते इति स्थिते अनेन वृद्धि । **प्रष्ठौह इति** ॥ प्रष्ठ वहतीति प्रष्ठवाट् । 'वहश्च' इति ण्वि । 'वेरपृक्तस्य' इति वलोप । अत उपधाया इति वृद्धि । ततश्शसि वसोस्सम्प्रसारणमित्यतस्सम्प्रसारणमित्यनुवृत्तौ 'वाह ऊठ' इति सम्प्रसारणसञ्ज्ञकस्य ऊठस्सम्प्रसारणाच्चेति पूर्वरूपम् । प्रष्ठ ऊह् इति स्थिते अनेन वृद्धि औकार । नन्वत्र एत्येधतिग्रहण व्यर्थम् । उपैति उपैधत इत्यत्र वृद्धिरेचीत्यनेनैव वृद्धिसम्भवात् । ऊठ् ग्रहणमपि व्यर्थम् । वृद्धिरेचीत्येव सिद्धे । वाह ऊठ् सूत्रे ऊठ् ग्रहणानर्थक्यम् । सम्प्रसारणेन कृतत्वात् । गुणस्तु प्रत्ययलोपलक्षणत्वात् । एज्ग्रहणाद्वृद्धिरिति वार्तिककृता तथैवोक्तत्वात् । वाह ऊठ् ग्रहणन्नकर्तव्यम् । वाह इत्येव सूत्रमस्तु । भस्य वाहस्सम्प्रसारण स्यादिति सम्प्रसारणमेव विधीयताम् । ततश्च वकारस्य उकारे सम्प्रसारणे पूर्वरूपे सति उह् इति स्थिते प्रत्ययलक्षणमाश्रित्य ण्विप्रत्यये परे उकारस्य लघूपधगुणे ओकारे कृते प्रष्ठ ओह इति स्थिते वृद्धिरेचीति वृद्धिरिति वार्तिकार्थ । तस्मादेत्येधत्यूठ्सु इति सूत्र व्यर्थमित्यत आह । **पररूपगुणापवाद इति** ॥ एत्येधत्योरेङि पररूपमित्यस्य, ऊठि आद्गुण इत्यस्यायमपवाद इत्यर्थ । यदि हि वाहस्सम्प्रसारणमेव विधीयेत न तु ऊठ्, तर्हि वस्य सम्प्रसारणेन उत्वे कृते पूर्वरूपे सति तस्य लघूपधगुणो न भवति । तस्मिन् कर्तव्ये बहिर्भूतशस्प्रत्ययापेक्षभसञ्ज्ञापेक्षसम्प्रसारणाश्रितपूर्वरूपस्य बहिरङ्गतया अत्र असिद्धत्वात् । तथाच गुणाभावे प्रष्ठ उ आह् इति स्थिते पूर्वरूपे प्रष्ठ उह इति स्थिते आद्गुण इति गुणे ओकारे प्रष्ठोह इति स्यात् । सम्प्रसारणसञ्ज्ञकस्य ऊठो विधौ तु प्रष्ठ ऊ आह् इति स्थिते पूर्वरूपे लघूपधगुणस्याप्रसक्ततया ओकारस्याभावादूकारस्यैव सत्वान् वृद्धिरेचीत्यस्याप्रसक्तेराद्गुण इति प्राप्ते एत्येधत्यूठ्स्विति वृद्धौ प्रष्ठौह इति सिध्यतीत्यूठ्ग्रहणमावश्यकमिति वाह ऊठ् सूत्रे समुदाहृतवार्तिक भाष्ये दूषितमित्यास्तान्तावत् । **उपेत इति** ॥ इणधातोर्लट् तस् शप् लुक् सार्वधातृकमपिदिति तस्य क्त्विात् तस्मिन् परत इकारस्य न गुण । अत्र इण् धातोरेजादित्वाभावात्तस्मिन् परतो न वृद्धि । **माभवान्प्रेदिधदिति** ॥ एधधातोर्णिच् । लुङ् तिप् 'नित्य ङित' इति इकारलोप । 'णिश्रिद्रुस्नुभ्य' इति चङ् । 'णौ चङ्युपधाया ह्रस्व' । 'चङि' इत्यजादेर्द्वितीयस्य धिशब्दस्य द्वित्वम् । अभ्यासे चर्चेति जश्त्वम् । न माङ्योग इत्याडभाव । भवच्छब्दयोगात् प्रथमपुरुष । तच्च तिङन्ताधिकारे स्पष्टीभविष्यति । प्र इदिधदिति स्थिते एत्येधतीति न वृद्धि । एधधातोरेजादित्वाभावात् । तत्र एजादित्वविशेषणाभावे तु इहापि वृद्धिस्स्यात् । न च णौ चङीत्येकारस्य ह्रस्वेन इकारे सति नायमेधधातुरिति वाच्यम् । एकदेशविकृतस्यानन्यत्वात् । अत्र माङ विहाय प्रेदिधदिति न प्रत्युदाहृतम् । तथा सति आडजादीनामित्याडागमे आटश्चेति वृद्धौ प्र ऐदिधदिति स्यात् । तत्र एधतेरेजादित्वाद्वृद्धिरिष्टैव । भवच्छब्दस्तु चिन्त्यप्रयोजन । ननु आ इहि आद्गुण एहि अव एहीति स्थिते एकादेशस्य गुणस्य

दिधत्। पुरस्तादपवादन्यायेनेय वृद्धि 'एङि पररूपम्' (सू ७८) इत्यस्यैव बाधिका। न तु 'ओमाङोश्च (सू ८०) इत्यस्य। तेन 'अवैहि' इति वृद्धिरसाधुरेव। 'अक्षादूहिन्यामुपसंख्यानम्' (वा ३६०४)। अक्षौहिणी सेना। 'स्वादीरेरिणो' (वा ३६०६)। स्वैर। स्वेनेरितुं शीलमस्येति स्वैरी। स्वै-

---

एकारस्य अन्तादिवच्चेति परादिवद्भावेन, आद्यन्तवदेकस्मिन्निति व्यपदेशिवद्भावेन च, इण् धातोरेजादित्वात्तस्मिन् परे एङि पररूपमिति पररूप बाधित्वा एत्येधत्यूठ्स्विति वृद्धौ अवैहीति स्यात्। अवेहीति इष्ट न स्यात्। न च ओमाङोश्चेति पररूपेण तन्निर्वाहश्शङ्क्य। एत्येधतीति वृद्धिर्हि यथा एङि पररूपमित्यस्यापवाद तथा ओमाङित्यस्याप्यपवाद। येन नाप्राप्तिन्यायसाम्यात् इत्यत आह। **पुरस्तादिति**॥ पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरानिति न्याय। पूर्वपठिता अपवादा अव्यवहितानेवोत्तरान्विधीन् बाधन्ते न तु व्यवहितानित्यर्थ। प्रकृते च एत्येधत्यूठ्सु इत्युत्तर कानि चित् सूत्राणि पठित्वा एङि पररूपमिति पठित्वा पुन कतिपयसूत्राणि पठित्वा ओमाङोश्चेति पठितम्। ततश्च उक्तन्यायेन एत्येधतीति वृद्ध्या एङि पररूपमित्येव बाध्यते। नत्वोमाङोश्चेति पररूपमपीति भाव। वस्तुतस्तु एत्येधतीति वृद्धि ओमाङोश्चेत्यस्यापवाद एव न भवति। उपैति इत्यादौ अप्राप्तेऽपि तस्मिन् एत्येधतीति वृद्धेरारम्भात्। अत पुरस्तादपवादा इति न्यायस्य नाय विषय। ततश्च अव एहीत्यत्र एत्येधतीति बाधित्वा परत्वादोमाङोश्चेति पररूप न्याय्यमित्येव वक्तुमुचितम्। अतएव भाष्ये "नाप्राप्ते पररूपे एत्येधतीति वृद्धिरारभ्यमाणा भवति तस्यापवाद। एङीति पररूपे तु प्राप्तेचाप्राप्ते च आरभ्यमाणा वृद्धिर्न तदपवाद" इति स्पष्टमेवोक्तम्। यत्तु भाष्ये पक्षान्तरमुक्तम्। "अथवा पुरस्तादपवादा अनन्तरान्विधीन् बाधन्त इत्येवमेत्येधतीति वृद्धिरेङिपररूपमेव बाधते। नत्वोमाङोश्चेति पररूपमपि" इति। तत्तु एत्येधतीतिवृद्धेरेङि पररूपमोमाङोश्चेति सूत्रद्वयापवादत्वाभ्युपगमवादमात्रमाश्रित्य बाध्यसामान्यचिन्तामाश्रित्य वेत्यल बहुना। **अक्षादूहिन्यामुपसङ्ख्यानम्***॥ आदिति, अचीति, वृद्धिरिति चानुवर्तते। एक पूर्वपरयोरिति च। ऊह वितर्के। ऊहनमूह सोऽस्या अस्तीत्यूहिनी। अक्षशब्दादूहिनीशब्दे परे पूर्वपरयोरचो वृद्धिरेकादेशस्स्यादित्यर्थ। अक्षौहिणीति मत्वर्थीय इनि। नान्तत्वान्ङीप्। अक्षाणामूहिनीति विग्रह। परिमाणविशेषविशिष्टा सेना अक्षौहिणी। 'पूर्वपदात् सञ्ज्ञायाम्' इति णत्वम्। अक्ष ऊहिनीति स्थिते गुणे प्राप्ते अनेन वार्तिकेन वृद्धि। **स्वादीरेरिणोः**॥ स्वशब्दादीरशब्दे ईरिन्शब्दे च परे पूर्वपरयोरचोर्वृद्धिरेका-

---

अक्षौहिण्यस्सप्ततिरष्टशतान्येकविंशतिसहस्रम्।
द्विरदास्तथा रथा तत्त्रिपञ्चगुणकास्तुरङ्गनरा॥

प्रक्रियाकौमुदीकारेण तु अक्षाणामूह समूह सोऽस्या अस्तीति विगृहीतम्। तदपि ऊहिनीशब्देन षष्ठीतत्पुरुष इत्येव परतयैव कथञ्चिन्नेयम्। ऊहशब्देन समासे तत इनौ तु वृद्धिर्न स्यात्। अन्तरङ्गेण गुणेन बाधात्। अपवादभूताया अपि वृद्धे ऊहिनीशब्देन विग्रहे चरितार्थत्वात्। अपवादोऽप्यन्यत्र चरितार्थश्चेत्परान्तरङ्गाभ्या बाध्यत इति न्यायात्।

रिणी । 'प्रादूहोढोढ्येषैष्येषु' (वा ३६०५) । प्रौहः । प्रौढः । 'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्' (प १५) । 'व्रश्च-' (सू २९४) इति सूत्रे राजे पृथग्भ्राजिग्रहणाज्ज्ञापकात् । तेनोढग्रहणेन क्तान्तमेव गृह्यते । न तु क्तवत्वन्तस्यैकदेशः । प्रोढवान् । प्रौढिः । 'इष् इच्छायां तुदादि,' 'इष् गतौ दिवादि',' 'इष् आभीक्ष्ण्ये क्र्यादि,' एषां घञि ण्यति च 'एष' 'एष्य' इति रूपे । तत्र पररूपे प्राप्ते अनेन वृद्धिः । प्रैषः । प्रैष्यः । यस्तु ईष् उञ्छे' यश्च 'ईष् गतिहिंसादर्शनेषु' तयोर्दीर्घोपधत्वात् ईषः, ईष्यः । तत्राद्गुणे प्रेषः । प्रेष्यः ।

देशस्स्यादित्यर्थः । **स्वैर इति** ॥ ईर गतौ । भावे घञ् । स्वेन च्छन्देन ईरः इति विग्रहः । 'कर्तृकरणे-कृता बहुळम्' इति समासः । स्व ईर इति स्थिते गुणे प्राप्ते अनेन वार्तिकेन वृद्धिः । **स्वैरितुमिति** ॥ स्वेन छन्देन ईरितुं सञ्चरितुं शीलमस्येत्यर्थे सुप्यजाताविति णिनिः । स्वच्छन्दचारीत्यर्थः । उपपदसमासः । स्व ईरिन् इति स्थिते गुणे प्राप्ते अनेन वृद्धिः । **प्रादूहोढोढ्येषैष्येषु** ॥ प्र इत्युपसर्गात् ऊह, ऊढ, ऊढि, एष, एष्य, एतेषु परेषु पूर्वपरयोरचोर्वृद्धिरेकादेशस्स्यादित्यर्थः । **प्रौहः इति** ॥ ऊह वितर्के । भावे घञ् । गतिसमासः । प्र ऊह इति स्थिते अनेन वार्तिकेन वृद्धिः । **प्रौढः इति** ॥ वह प्रापणे क्तः । वचिस्वपीति सम्प्रसारणम् । पूर्वरूपम् । हो ढ इति ढत्वम् । झषस्थथोरिति धत्वम् । ष्टुत्वम् । ढो ढे लोपः । ढ्लोप इति दीर्घः । प्र ऊढ इति स्थिते गुणे प्राप्ते अनेन वृद्धिः । ननु प्रोढवानित्यत्रापि वहधातोः क्तवतुप्रत्यये ढत्वधत्वष्टुत्वढलोपदीर्घेषु प्र ऊढवदिति स्थिते प्रादूहोढेति वृद्धिस्स्यात् । तत्रापि ऊढशब्दस्य परत्वेन श्रवणादित्यत आह । **अर्थवदिति** ॥ अर्थवतश्शब्दस्य ग्रहणसम्भवे अनर्थकस्य शब्दस्य ग्रहणन्न भवतीत्यर्थः । इयं परिभाषा स्वं रूपमित्यत्र रूपग्रहणात् सिद्धेति तत्रैव सूत्रे भाष्ये स्पष्टम् । **तेनेति** ॥ अर्थवत एव ग्रहणनियमेनेत्यर्थः । **क्तान्तमेवेति** ॥ क्तप्रत्ययस्तावदर्थवान् । भावकर्मणोस्तद्विधानात् । क्तवतुप्रत्ययस्तु कर्तरि विहितः । अतस्तदेकदेशस्य क्तस्यानर्थकत्वात् प्रादूहोढेत्यत्र ऊढग्रहणेन ग्रहणन्न भवति । अतस्तस्मिन् परे वृद्धिर्न भवति । किन्तु गुण एवेत्यर्थः । **प्रौढिरिति** ॥ वह धातोः क्तिन् । ढत्व धत्व ष्टुत्व ढलोप दीर्घाः । प्र ऊढि इति स्थिते । गुणं बाधित्वा अनेन वृद्धिः । इषु इच्छायामित्यादि गणत्रयेऽपि ह्रस्वोपधा एव एते धातवः । तेषामिति निर्धारणे षष्ठी । तेषाम्मध्ये अन्यतमात् घञि ण्यति च सति लघूपधगुणे कृते एष एष्य इति च रूपे सिद्धे । प्र एष प्र एष्य इति स्थिते एङि पररूपं बाधित्वा अनेन वृद्धिः । एतेन वृद्धिरेचीत्यनेन एषैष्यग्रहणयोर्गतार्थत्वं निरस्तम् । नन्वेवं सति प्रेष इति प्रेष्य इति च कथं प्रयोग इत्यत आह । **यस्त्विति** ॥ तयोर्दीर्घोपधत्वेन लघूपधगुणाभावे ईष ईष्य इति च सिध्यति । तयोस्तु एतद्वार्तिके ग्रहणाभावात् । तयोः परतो वृद्ध्यभावे आद्गुण इति गुणे प्रेषः प्रेष्य इत्यपि रूपद्वयमस्तीत्यर्थः । एषशब्दसाहचर्यात् एष्यशब्दोऽपि कृदन्त एव गृह्यते । तेन तिङन्ते ल्यबन्ते च न वृद्धिः । अग्नये प्रेष्य दूतं प्रेष्य गतः । **ऋते च तृतीयासमासे** ॥ तृतीयासमासे अकारात् ऋतशब्दे परे पूर्वपरयोरचोर्वृद्धिः स्यादित्यर्थः । सुखेन ऋत इति

'ऋते च तृतीयासमासे' (वा० ३६०७)। सुखेन ऋत सुखार्त.। 'तृतीया' इति किम्। परमर्त। 'प्रवत्सतरकम्बलवसनदशार्णानामृणे' (वा० ३६०८-९)। प्रार्णम्। वत्सतरार्णमित्यादि। ऋणस्यापनयनाय यदन्यदृणं क्रियते तदृणार्णम्। दशार्णो देश। नदी च दशार्णा। ऋणशब्दो दुर्गभूमौ जले च।

## ७४। उपसर्गादृति धातौ। (६-१-११)

अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेश स्यात्। उपार्च्छति। प्रार्च्छति।

## ७५। अन्तादिवच्च। (६-१-८५)

---

विग्रहप्रदर्शनम्। ऋ गतौ, गत्यर्थाकर्मकेति कर्तरि क्त। प्रकृत्यादित्वात् तृतीया। सुप्सुपेति समास। सुख ऋत इति स्थिते गुणे प्राप्ते अनेन वृद्धि आकार। रपरत्वे सुखार्त इति रूपम्। समासग्रहणस्य उदाहृतविग्रहवाक्यमेव प्रत्युदाहरण दर्शितप्रायमिति तृतीयेत्यशस्य प्रयोजन पृच्छति। **तृतीयेति किमिति। परमर्त इति**॥ परमश्चासौ ऋतश्चेति कर्मधारय। आद्गुण। **प्रवत्सतर**॥ पञ्चम्यर्थे षष्ठी। प्र, वत्सतर, कम्बल, वसन, दश, ऋण, एतेषा ऋणशब्दे परे पूर्वपरयोरचोर्वृद्धिरेकादेशस्स्यादित्यर्थ। **प्रार्णमिति**॥ प्रगतमृणमिति विग्रहे, प्रादयो गताद्यर्थे प्रथमयेति गतिसमास। प्र ऋण इति स्थिते गुण बाधित्वा अनेन वार्तिकेन वृद्धि आकार। रपरत्वम्। वत्सतर शिशुवत्स, तस्य ऋणमिति विग्रह। वत्सतरमविक्रीय वा तद्ग्रहणार्थं वा यदृण गृह्यते तत् वत्सतरार्णम्। एवमग्रेपि द्रष्टव्यम्। आदिशब्देन कम्बलार्ण वसनार्ण दशार्ण ऋणार्णमिति च गृह्यते। सर्वत्र षष्ठीसमास। ऋणशब्दस्य ऋणशब्दे परे कथमन्वय इत्यत आह। **ऋणस्येति**॥ देशनदीविशेषयो कथ दशार्णशब्दप्रवृत्तिरित्यत आह। **ऋणशब्द इति**॥ तथाच दश ऋणानि दुर्गभूमय यस्मिन् देशे स दशार्ण देशविशेष। दशविधानि ऋणानि जलानि यस्या नद्या सा दशार्णेति विग्रह। **उपसर्गादृति**॥ आद्गुण इत्यत आदिति पञ्चम्यन्तमनुवर्तते। तच्च उपसर्गविशेषणम्। अतस्तदन्तविधि अकारान्तादिति लभ्यते। ऋतीति धातोर्विशेषणम्। यस्मिन्विधिरिति तदादिविधि। ऋकारादाविति लभ्यते। वृद्धिरेचीत्यतो वृद्धिरिति चानुवर्तते। एक पूर्वपरयोरित्यधिकृतम्। तदाह। **अवर्णान्तादित्यादिना। एकादेश इति**॥ पूर्वपरयोरचोरिति शेष। अन्यथा उपसर्गस्य धातोश्च सर्वादेशस्स्यात्। **उपार्च्छति। प्रार्च्छतीति**॥ उप ऋच्छति प्र ऋच्छति इति स्थिते गुणे प्राप्ते अनेन वृद्धि रपरत्वम्। अथ तस्य रेफस्य पदान्ते विहित विसर्गमाशङ्कितु तस्य पदान्तत्वसाधनायाह। **अन्तादिवच्च**॥ एक पूर्वपरयोरिति सूत्रमनुवर्तते। यथासङ्ख्यपरिभाषया आद्यन्तवदित्यस्य क्रमेणान्वय। ततश्च पूर्वपरयोर्भवन् एक आदेश पूर्वस्यान्तवत् परस्यादिवदिति लभ्यते। यद्यपि एकादेशस्य द्वौ वर्णौ स्थानिनौ। पूर्व परश्च। तयोश्च वर्णयो प्रत्येकमेकत्वादखण्डत्वात्तदपेक्षया एकादेशस्य अन्तादिवत्त्वकथनमसङ्गतम्। तथापि पूर्वपरवर्णयोर्भवन्नेकादेश

योऽयमेकादेश स पूर्वस्यान्तवत्परस्यादिवत्स्यात् । इति रेफस्य पदान्तत्वे ।

## ७६ । खरवसानयोर्विसर्जनीयः । (८-३-१५)

खरि अवसाने च परे रेफस्य विसर्जनीय स्यात्पदान्ते। इति विसर्गे प्राप्ते। अन्तवद्भावेन पदान्तरेफस्य न विसर्ग । 'उभयथर्क्षु' (सू ३६३०), 'कर्तरि

---

प्रथमस्थानिघटितसमुदायस्य पूर्वस्य य अन्त प्रथमस्थानी तत्कार्यकारी भवति। द्वितीयस्थानिघटितसमुदायस्य उत्तरस्य य आदि द्वितीयस्थानी तत्कार्यकारी भवतीत्यर्थो विवक्षित । तत्र पूर्वान्तवत्त्वे यथा। क्षीरपेण। क्षीरप इन इति स्थिते आद्गुण इत्येकादेश एकार । तत्र पूर्वान्तवत्त्वेन प इत्युत्तरपदस्य एकाच्त्वादेकाजुत्तरपदे ण इति णत्व भवति । अत्र एकादेशे स्थानिवत्सूत्रन्तु न प्रवर्तते। एकादेशस्थानीभूत पकारादकारमालम्ब्य पे इत्यस्य एकाजुत्तरपदत्वाश्रयेण प्रवर्तमानस्य णत्वस्य स्थन्यलाश्रयत्वात्। यद्यपि एकाजुत्तरपदत्वमेव प्राधान्येन णत्वविधिराश्रयति। पकारादकार स्थान्यलन्तु तद्विशेषणीभूताच्त्वेनाश्रयति। तथाप्यनल्विधाविति निषेधोऽत्र भवत्येव। यथाकथञ्चित् स्थान्यलाश्रयणस्यैव तत्र विवक्षितत्वात्। अन्यथा प्रतिदीव्येत्यत्र क्त्वादेशे ल्यप स्थानिगतवलाद्यार्द्धधातुकत्वेनाश्रित्य इडागमे कर्तव्ये अनल्विधाविति निषेधानुपपत्ते । तत्र वल प्राधान्येनाश्रयणाभावात् । एतेन स्थानिवत्सूत्रेण गतार्थमिद सूत्रमिति निरस्तम्। परादिवत्त्वे यथा। खट्वा। अत्र खट्वशब्दादजाद्यतष्टाप्। सवर्णदीर्घ आकार । तस्य परादिवत्त्वेन टाप्त्वात्तत परस्य सोर्हल्ङ्यादिलोप। इदमपि स्थानिवद्भावेन अनिर्वाह्यम्। हल्ङ्यादिलोपस्यात्र स्थान्यलाश्रयताया मूलकृतैव वक्ष्यमाणत्वात्। नचैव सति यजेर्लेडि उत्तमपुरुषैकवचने इटि शपि आद्गुणे अडागमे अयज इन्द्रमित्यत्र गुणस्य एकादेशस्य परादिवत्त्वेन इकारत्वात्तत्र इकारे परे सवर्णदीर्घस्स्यादिति वाच्यम्। इह हि अल्समुदायधर्मा एव प्रातिपदिकत्वसुबन्तत्वप्रत्ययत्वादय अतिदिश्यन्ते, नतु वर्णमात्रधर्मा अत्वह्रस्वत्वादय । उक्तञ्च भाष्ये। न वा अताद्रूप्यातिदेशादिति । अन्तादिवर्णमात्रवृत्तिधर्मानतिदेशादयज इन्द्रमित्येवञ्जातीयकेषु सवर्णदीर्घादिकन्नभवतीत्यर्थ । इत्यलमतिविस्तरेण । **इति रेफस्येति** ॥ उपार्च्छतीत्यत्र आर् इत्येकादेशस्य पूर्वान्तवत्त्वेन रेफस्य पदान्तत्वे सति विसर्गे प्राप्त इत्युत्तरेणान्वय । कथ विसर्गप्राप्तिरित्यत आह। **खरवसानयोः** ॥ रोरीत्यत र इति षष्ठ्यन्तमनुवर्तते। तच्च पदस्येत्यधिकृतस्य विशेषणम्। येन विधिरिति रेफान्तस्येति लभ्यते। खरि अवसाने च परत रेफान्तस्य पदस्य विसर्जनीयस्स्यादित्यर्थ । अलोन्त्यस्येत्यन्त्यस्य भवति । अभावरूपस्य चावसानस्य बुद्धिकृत परत्वम्। फलितमाह । **खरि अवसाने चेति । पदान्तइति** ॥ विद्यमानस्येति शेष । यदि तु अन्त्यवर्णस्य अवसानसञ्ज्ञा तदा अवसान इत्यत्र योजना विरामोऽवसानमित्यत्रोक्ता । **इति विसर्गे इति** ॥ उपार्च्छतीत्यादौ अनेन विसर्गे प्राप्ते तत्परिहार उच्यत इत्यर्थ । **अन्तवदिति** ॥ अन्तवत्त्वेन पदान्तत्व प्राप्तस्य रेफस्य विसर्गो न भवतीत्यर्थ । कुत इत्यत आह । **उभयथर्क्ष्विति** ॥ अन्यथा तत्रापि विसर्गनिर्देशस्स्यादिति भाव । नन्वत्र

चर्षिदेवतयो' (सू ३१६७) इत्यादिनिर्देशात्। उपसर्गेणैव धातोराक्षेपे सिद्धे 'धातौ' इति योगविभागेन पुनर्वृद्धिविधानार्थम्। तेन 'ऋत्यक' (सू ९२) इति पाक्षिकोऽपि प्रकृतिभावोऽत्र न भवति।

## ७७। वा सुप्यापिशलेः। (६-१-९२)

अवर्णान्तादुपसर्गादृकारादौ सुब्धातौ परे वृद्धिरेकादेशो वा स्यात्। आपिशलिग्रहणं पूजार्थम्। प्रार्षभीयति-प्रर्षभीयति। सावर्ण्यात् लृवर्णस्य ग्रहणम्। उपाल्कारीयति-उपल्कारीयति। तपरत्वाद्दीर्घे न। उप ॠकारीयति-उपर्कारीयति।

---

धाताविति व्यर्थम्। उपसर्गग्रहणादेव धाताविल्यस्य सिद्धे। क्रियायोगे सत्येव उपसर्गसञ्ज्ञाविधानात्। नच उपगत ऋकार उपर्कार इत्यत्र क्रियायोगस्य सत्वादुपसर्गत्वाच्च वृद्धिप्राप्तौ तन्निवृत्त्यर्थमिह धातुग्रहणमिति वाच्यम्। यत्क्रियायुक्ता प्रादय त प्रत्येव गत्युपसर्गसञ्ज्ञा इति परिभाषया गम्यमानगमनक्रिया प्रत्येव उपसर्गत्वात्। प्रकृते च ऋकारादिनिमित्तकोपसर्गत्वस्यैव विवक्षितत्वादित्याशङ्क्याह। **उपसर्गेणैवेत्यादिना**॥ उपसर्गग्रहणेनैव धातो आक्षेपे अन्यथानुपपत्तिरूपार्थापत्तितो लाभे सति पुन धाताविति वचन पुनर्विधानार्थमित्यन्वय। कथ पुनर्विधानलाभ इत्यत आह। **योगविभागेनेति**॥ योगशब्दस्सूत्रशब्दपर्याय। उपसर्गादृतीति, धाताविति च, सूत्र विभज्यते। तत्र उपसर्गादृतीति पूर्वसूत्रे धाताविल्यर्थाल्लभ्यमादाय उक्तार्थलाभ। धातावित्युत्तरसूत्रेऽपि उपसर्गादृतीति पूर्वसूत्रमनुवर्तते। तथाच पूर्वसूत्रसमानार्थकमेतत्सूत्र सम्पद्यत इति पुनर्विधानलाभ इत्यर्थ। किमर्थमिद पुनर्विधानमित्यत आह। **तेनेति**॥ पुनर्विधानेनेत्यर्थ। **नभवतीति**॥ परोऽपि प्रकृतिभाव पुनर्विधानसामर्थ्यात् बाध्यत इत्यर्थ। **वा सुपि**॥ उपसर्गादृति धाताविति पूर्वसूत्रमनुवर्तते। आद्गुण इत्यत वृद्धिरेचीत्यतश्च आदिति वृद्धिरिति चानुवर्तते। आदित्यनेन उपसर्गादिति विशेष्यत इति तदन्तविधि। प्रत्ययग्रहणपरिभाषया सुप्शब्देन सुबन्तप्रकृतिको धातुर्विवक्षित। एक पूर्वपरयोरिति चाविकृतम्। तदाह। **अवर्णान्तादित्यादिना। सुब्धाताविति**॥ सुबन्तप्रकृतिकधातौ परत इत्यर्थ। सुबन्तस्य धातोरसम्भवात्। **एकादेश इति**॥ पूर्वपरयोरचोरिति शेष। यद्यपि ऋच्छ गतावित्यादीना क्विपि धातुत्व सुबन्तत्वञ्च सम्भवति। तथापि तुल्यास्यसूत्रभाष्ये उपार्कारीयतीत्यादेरेतदुदाहरणत्वेन भाष्ये उक्तत्वात्। सुबन्तप्रकृतिके इत्येव व्याख्यानमुचितम्। ननु वाग्रहणादेव सिद्धे आपिशलिग्रहण व्यर्थमित्यत आह। **आपिशलिग्रहणमिति**॥ आपिशलेराचार्यस्याप्ययमर्थ सम्मत इत्यादरलाभार्थमित्यर्थ। **प्रार्षभीयतीति**॥ ऋषभमात्मन इच्छतीत्यर्थे 'सुप आत्मन क्यच्' 'सनाद्यन्ता' इति धातुत्वम्। 'सुपो धातुप्रातिपदिकयो' इति सुपो लुक् 'क्यचि च' इति ईत्वम्, लट्, तिप्, शप्, पररूपम्। प्र ऋषभीयति इति स्थिते अनेन वृद्धि आकार रपरत्वम्। **प्रर्षभीयतीति**॥ वृद्ध्यभावपक्षे आद्गुण रपरत्वम्। **सावर्ण्यादिति**॥ ऋ ऌ वर्णयोरिति सावर्ण्यादृतीत्यनेन ऌतोऽपि ग्रहणमित्यर्थ। **उपाल्कारीयतीति**॥ ऌकारमात्मन इच्छतीत्यर्थे क्यजादि पूर्ववत्। लपरत्व विशेष। **उपल्कारीयतीति**॥

चतुर्मुख । 'प्रत्यये भाषायां नित्यम्' (वा ५०१७) । तन्मात्रम् चिन्मयम् । कथं तर्हि 'मदोदग्रा ककुद्मन्त' इति । यवादि (ग २५०) गणे दकारनिपातनात् ।

## ११७ । तोर्लि । (८-४-६०)

तवर्गस्य लकारे परे परसवर्ण स्यात् । तल्लय । विद्वाँल्लिखति । नकारस्यानुनासिको लकार ।

## ११८ । उदः स्थास्तम्भ्वोः पूर्वस्य । (८-१-६१)

उद परयो स्थास्तम्भ्वो पूर्वसवर्ण स्यात् । 'आदे परस्य' (सू ४४) उत्थानम् । उत्तम्भनम् । अत्राघोषस्य महाप्राणस्य सस्य तादृश एव थकार ।

---

न्यायादिति भाव । **प्रत्यये भाषायान्नित्यम्** ॥ वार्तिकमेतत् । भाषा लौकिकप्रयोग । तत्र प्रत्यये विद्यमाने अनुनासिके परत प्रागुक्तोऽनुनासिको नित्य भवतीत्यर्थ । **तन्मात्रमिति** ॥ तत् प्रमाण यस्य तत्तन्मात्र 'प्रमाणे द्वयसज्दघ्नञ्मात्रच' इति मात्रच्प्रत्यय । **चिन्मयमिति** ॥ 'नित्य वृद्धशरादिभ्य' इत्यत्र नित्यमिति योगविभागात्ताद्रूप्ये मयट् । **कथं तर्हीति** ॥ यदि प्रत्यये परे नित्यमनुनासिकस्स्यात् तदा मदोदग्रा ककुद्मन्त इति कालिदासप्रयोग कथमित्याक्षेप । मतुप प्रत्ययत्वेन तस्मिन् परे दकारस्य अनुनासिकनकारावश्यम्भावादिति भाव । परिहरति । **यवादीति** ॥ यवादिगणे ककुद्मच्छब्दे दकारस्य निर्देशान्न तस्यानुनासिक । यदि तत्र दकारस्य नकार एव इष्टस्स्यात् तर्हि नकारमेव लाघवान्निर्दिशेदिति भाव । **तोर्लि** ॥ अनुस्वारस्य ययीत्यत परसवर्ण इत्यनुवर्तते । तदाह । **तवर्गस्येत्यादिना । तल्लय इति** ॥ तस्य लय इति विग्रह । तद् लय इति स्थिते दस्य परसवर्ण परनिमित्तभूतलकारसवर्णो भवति । स च लकार एव । अन्यस्य तत्सावर्ण्याभावात् । **अत्र नकारस्येति** ॥ विद्वान् लिखतीत्यत्र विद्वान् लिखतीति स्थिते नकारस्य स्थानिन अनुनासिकस्य परसवर्णो लकारो भवन् आन्तर्यादनुनासिक एव लकारो भवतीत्यर्थ । **उदस्स्थास्तम्भ्वो** ॥ 'अनुस्वारस्य ययि परसवर्ण' इत्यत्र समासनिर्दिष्टमपि सवर्णग्रहणमिह निष्कृष्य सम्बध्यते । एकदेशे स्वरितत्वप्रतिज्ञानात् । उद इति पञ्चमी । अतस्तस्मादित्युत्तरस्येति परिभाषया उद परयोरिति लभ्यते । तदाह । **उदःपरयोरिति । पूर्वस्येति** ॥ पूर्वनिमित्तस्य उदो दकारस्य यस्सवर्ण स आदेशस्स्यादित्यर्थ । पूर्वसवर्णश्चायमलोऽन्त्यपरिभाषया स्थास्तम्भ्वोरन्तादेशो न भवतीत्याह । **आदेः परस्येति** ॥ अनया परिभाषया स्थास्तम्भ्वोराद्यवयवस्य सकारस्यैव भवतीत्यर्थ । **उत्थानमिति** ॥ ष्ठा गतिनिवृत्तौ । भावे ल्युट् । **उत्तम्भनमिति** ॥ 'ष्टभि प्रतिष्टम्भे' भावे ल्युट् । स्तम्भु रोधन इति श्नुविधौ निर्दिष्टस्सौत्रो वा धातु । स्थास्तम्भ्वोरिति पवर्गीयोपधनिर्देशस्य उभयसाधारणत्वात् । ननु उद् स्थानमित्यत्र सकारस्य पूर्वसवर्णविधौ पूर्वनिमित्त दकार तत्सवर्णाश्च त थ द

तस्य 'झरो झरि--' (सू ७१) इति पाक्षिको लोप । लोपाभावपक्षे तु थकारस्यैव श्रवणम् । नतु 'खरि च' (सू १२१) इति चर्त्वम् । चर्त्वं प्रति थकार-स्यासिद्धत्वात् ।

## ११९ । झयो होऽन्यतरस्याम् । (८-४-६२)

---

ध ना पञ्चैव । दन्तस्थानसाम्यात् स्पृष्टप्रयत्नसाम्याच्च । नतु लकार सकारश्च । तयो स्थानसाम्येऽपि विवृतप्रयत्नत्वात् । नापि लकार ईपत्स्पृष्टत्वात् । एतदतिरिक्ताश्च सर्वे वर्णा भिन्नस्थानकत्वान्न दकारसवर्णा । ततश्च पूर्वनिमित्तभूतदकारसवर्णा त थ द ध ना पञ्चापि सकारस्य प्राप्ता । स्थानीभूतसकारेण दन्तस्थानत आन्तर्यस्य पञ्चस्वप्यविशिष्टत्वात् । आभ्यन्तरप्रयत्नत आन्तर्यस्य च पञ्चस्वप्यभावात् । स्थानीभूतसकारस्य विवृतप्रयत्नत्वात् एतेषा च पञ्चाना स्पृष्टप्रयत्नत्वात् । अतोऽत्र बाह्यप्रयत्नत एवान्तर्यमादाय पञ्चस्वन्यतमव्यवस्थामाह । **अत्राघोषस्य महाप्राणस्य सस्य तादृश एव थकार इति** ॥ अघोषस्येत्यनेन श्वासवतो विवारवतश्चेत्युक्तप्रायम् । समनियतत्वात् । स्थानीभूतस्तावत् सकार अघोषश्वासविवारमहाप्राणात्मकयत्नचतुष्टयवान् । तस्य त थ द ध नेषु प्रथमतृतीयपञ्चमा न भवन्ति । तेषा अल्पप्राणत्वात् । नापि चतुर्थो भवति । तस्य घोषनादसवारयत्नकत्वात् । द्वितीयस्तु थकार अघोषश्वासविवारमहाप्राणात्मकयत्नचतुष्टयवान् । अतस्सएव थकार पूर्वनिमित्तभूतदकारसवर्ण सकारस्य भवतीत्यर्थ । एवञ्च उद् स्थानमिति स्थिते दकारस्य 'खरिच' इति चर्त्वेन तकारे सकारस्य पूर्वसवर्णे थकारे उत्थ्थानमित्येकतकार द्विथकारञ्च रूप सिद्ध । एव उत्थ् तम्भनमित्यत्रापि योज्यम् । तत्र द्वितकारमेकथकारञ्चेति विशेष । **तस्येति** ॥ सकारादेशस्य थकारस्येत्यर्थ । एवञ्च प्रथमथकारस्य लोपपक्षे एकतकारमेकथकारञ्च रूपमिति भाव । ननु प्रथमथकारस्य लोपाभावपक्षे एकतकार द्विथकार च रूपमित्यनुपपन्न। प्रथमथकारस्य खरिचेति चर्त्वे सति द्वितकारमेकथकार-मित्यापत्तेरित्यत आह । **लोपाभावेति । असिद्धत्वादिति** ॥ खरिचेति सूत्रापेक्षया उदस्स्यादित्यस्य परत्वादिति भाव । उत् त् तम्भनमिति त्रितकारपाठस्तु प्रामादिक । उक्तप्रक्रियाया उभयत्रापि साधारण्यात् । केचित्तु 'न मुने' इत्यत्र नेति योगविभागमभ्युपगम्य पूर्वसवर्णस्य थकारस्य चर्त्व प्रत्यसिद्धत्वाभावाच्चर्त्वे उत्त्तम्भनमिति त्रितकाररूप कथञ्चित् साधयामासु । तत्तु मूलकृतो न सम्मतम् । मूले उभयसाधारण्येनैव प्रक्रियानिरूपणात् । वस्तुतस्तु 'दीर्घादाचार्याणाम्' इत्युत्तर अनुस्वारस्य ययि परसवर्ण, वा पदान्तस्य, तोर्लि, उदस्स्थास्तम्भ्वो पूर्वस्य, झयो होऽन्यतरस्याम्, शश्छोऽटीति षट्सूत्रीपाठोत्तर झलाञ्जश् झशि, अभ्यासे चर्च, खरि च, वाऽवसाने, अणोऽप्रगृह्यस्यानुनासिक, इति पञ्चसूत्रीपाठ इति हलो यमामिति सूत्रस्थभाष्यसम्मतस्सूत्रक्रम । एवञ्च खरि चेति चर्त्वे कर्तव्ये उदस्स्थास्तम्भ्वोरिति पूर्वसवर्णस्य थकारस्य असिद्धत्वाभावाच्चर्त्वे उत्त्थानामिति द्वितकारमेकथकारञ्च रूपम् । उत्त्तम्भनमिति तु त्रितकारमेव रूपमिति शब्देन्दुशेखरे प्रपञ्चितम् । **झयो हः** ॥ झय इति पञ्चमी । परस्येत्यध्याहार्यम् । ह इति षष्ठी । उदस्स्थास्तम्भ्वोरित्यत पूर्वस्येति अनुस्वारस्य ययीत्यत सवर्ण इति चानु-

झयः परस्य हस्य पूर्वसवर्णो वा स्यात् । घोषवतो नादवतो महाप्राणस्य संवृतकण्ठस्य हस्य तादृशो वर्गचतुर्थ एवादेश । वाग्घरि --वाग्हरि ।

## १२० । शश्छोऽटि । (८-४-६३)

पदान्ताज्झय परस्य शस्य छो वा स्यादटि । दस्य चुत्वेन जकारे कृते ।

## १२१ । खरि च । (८-४-५५)

खरि झला चर स्यु. । इति जकारस्य चकार । तच्छिव --तच्शिव । 'छत्वममीति वाच्यम्' (वा ५०२५) । तच्छ्लोकेन- तच्श्लोकेन । अमि किम् । वाक् श्च्योतति ।

वर्तते । तदाह । **झयः परस्येत्यादिना** ॥ वाग्घरिरित्युदाहरणम् । वाच् शब्दश्चकारान्त , कुत्व जश्त्वम् । वाग् हरिरिति स्थिते हकारस्य पूर्वसवर्णविधौ गकार पूर्वनिमित्तम् । तत्सवर्णा क, ख, ग, घ, ङा पञ्च । तेषा हकारेण स्थानिना स्थानत आन्तर्यमविशिष्टम् । आभ्यन्तरप्रयत्नसाम्यन्तु पञ्चानामपि हकारेण स्थानिना न विद्यते । स्पृष्टविवृतप्रयत्नभेदात् । अत बाह्ययत्नत आन्तर्यमादाय पञ्चस्वन्यतमव्यवस्थामाह । **घोषवत इत्यादिना** ॥ स्थानीभूतो हकार. घोषनादसवारमहाप्राणाख्ययत्नचतुष्टयवान् । तस्य क ख ग घ ङेषु प्रथमतृतीया न भवन्ति । तेषा अल्पप्राणत्वात् । द्वितीय खकारो न भवति । तस्य अघोषश्वासविवारयत्नकत्वात् । चतुर्थस्तु घकार घोषनादसवारमहाप्राणवान् । अतस्सएव घकारो हकारस्य भवतीत्यर्थ । ततश्च वाग्घरिरिति भवति । पूर्वसवर्णाभावे तु वाग् हरिरिति । **शश्छोऽटि** ॥ झय इति पञ्चम्यन्तमनुवर्तते । श इति षष्ठ्येकवचनम् । तदाह । **झयः परस्य शस्येति** ॥ तद् शिव इति स्थिते दकारस्य चुत्वेन जकारे कृते जकारस्य चकार इत्यन्वय । केनेत्यत आह । **खरि च** ॥ झलाञ्जशझशीत्यतो झलामिति, अभ्यासे चर्चेत्यतश्चरिति, चानुवर्तते । तदाह । **खरि पर इत्यादिना** । **इति जकारस्य चकार इति** ॥ स्थानत आन्तर्यादिति भाव । तत छत्वम् । नतु प्रागित्यपि बोध्यम् । छत्वस्य चुत्वचर्त्वे प्रत्यसिद्धत्वात् । हलो यमामिति सूत्रस्थभाष्यसम्मतसूत्रक्रमे तु चुत्वेन जकारे कृते शस्य छत्व ततो जकारस्य चर्त्वम् । नतु छत्वात् प्राक् चर्त्व । चर्त्व प्रति छत्वस्यासिद्धत्वात् । **तच् छिव इति** ॥ स चासौ शिवश्चेति तस्य शिव इति वा विग्रह । चो कुरिति कुत्वन्तु न । चुत्वस्यासिद्धत्वात् । **छत्वममीति वाच्यम्** ॥ शश्छोऽटीति सूत्रे अटीति विहाय अमीति वक्तव्यमित्यर्थ । शश्छोऽमीति सूत्र पठनीयमिति यावत् । **तच् श्लोकेनेति** ॥ सचासौ श्लोकश्च, तस्य श्लोक इति वा, विग्रह । लकारस्य अड्बहिर्भूतत्वात् तत्परकस्य शकारस्य सूत्रपाठत छत्वे अप्राप्ते वार्तिकमिदम् । **वाक्श्च्योततीति** ॥ अत्र तु कुत्व भवत्येव । चकारस्य स्वाभाविकतया चुत्वावयवत्वाभावेन असिद्धत्वाभावात् । अत्र

## १२२। मोऽनुस्वारः। (८-३-२३)

मान्तस्य पदस्यानुस्वार स्याद्धलि। 'अलोऽन्त्यस्य' (सू ४२)। हरिं वन्दे। 'पदस्य' इति किम्। गम्यते।

## १२३। नश्चापदान्तस्य झलि। (८-३-२४)

नस्य मस्य चापदान्तस्य झल्यनुस्वार। यशांसि। आक्रंस्यते। 'झलि' किम्। मन्यते।

## १२४। अनुस्वारस्य ययि परसवर्णः। (८-४-५८)

स्पष्टम्। अङ्कित। अञ्चित। कुण्ठित। शान्त। गुम्फित।

---

चकारस्य अम्बहिर्भूतत्वात् तत्परकशकारस्यात्र न छत्वम्। **मोऽनुस्वारः॥** पदस्येत्यविकृतम्। म इति षष्ठ्यन्त पदस्य विशेषण, तदन्तविधि, हलि सर्वेषामित्यतो हलीत्यनुवर्तते। तदाह। **मान्तस्येत्यादिना॥** अलोऽन्त्यस्येति उपतिष्ठत इति शेष। ततश्च मान्तस्य पदस्य य अन्त्य अल् तस्येत्यर्थ। पदान्तस्य मस्येति फलितम्। **हरिं वन्द इति॥** हरिम् वन्द इति स्थिते मस्यानुस्वार। **गम्यत इति॥** गम्लृ गतौ। कर्मणि लट्, 'भावकर्मणो' इत्यात्मनेपद यक्। अत्र मस्य पदान्तत्वाभावान्नानुस्वार। **नश्चापदान्तस्य झलि॥** चकारान्मस्येत्यनुकृष्यते, अनुस्वार इति च। तदाह। **नस्येत्यादिना। यशांसीति॥** यशश्शब्दात् जस्। जश्शसोश्शि। 'नपुसकस्य झलच' इति नुम्। सान्तमहत इति दीर्घ। यशान् सि इति स्थिते, नकारस्य अनुस्वार। **आक्रंस्यत इति॥** क्रमु पादविक्षेपे। आङ्पूर्वात् कर्तरि लृट् 'आङ उद्गमने' इति तङ्। स्यतासी लृलुटोरिति स्य। स्नुक्रमोरिति नियमान्नेट्। आक्रम् स्य त इति स्थिते मस्य अपदान्तत्वात् पूर्वेणाप्राप्ते वचनम्। मन्यस इति कर्मणि लट् तङ् यक्। अत्र मस्य झल्परत्वाभावान्नानेनानुस्वार। अपदान्तत्वाच्च न पूर्वेण। **अनुस्वारस्य ययि। स्पष्टमिति॥** अनुवर्त्यपदान्तराभावादिति भाव। **अङ्कित इति॥** अङ्क पदे लक्षणेचेति चुरादौ नोपध। नश्चापदान्तस्येति कृतानुस्वारस्य निर्देश इति केचित्। ण्यन्तात् क्त इति निष्ठाया सेटीति णिलोप, अनुस्वारस्यानेन परसवर्ण, परनिमित्तमत्र ककार, तत्सवर्ण कवर्ग, स अनुस्वारस्य भवन् नासिकास्थानसाम्यात् ङकार एव भवति। **अञ्चित इति॥** अञ्चु गतिपूजनयो। नोपध। तस्मात् क्त। अञ्चे पूजायामिति इट्। नाञ्चे पूजायामिति निषेधात् अनिदितामिति नलोपो न। अत्र नश्चापदान्तस्येत्यनुस्वारस्य परसवर्णो ञकार। **कुण्ठित इति॥** 'कुठि प्रतिघाते' इदित्वान्नुम् क्त इट्। अत्र नश्चेत्यनुस्वारस्य परसवर्णो णकार। **शान्त इति॥** शम उपशमे क्त। वा दान्तशान्तेत्यादिनिपातनान्नेट्। अनुनासिकस्य क्वीति दीर्घ। नश्चेति मस्यानुस्वार। तस्य परसवर्ण नकार। **गुम्फित इति॥** गुम्फ ग्रन्थे द्वितीयान्त चतुर्थान्तो वा नोपध। क्त इट। 'नोपधात्थफान्ताद्वा' इत्यकित्त्वपक्षे नलोपो न। अत्र नश्चेत्यनुस्वारस्य परसवर्ण

'कुर्वन्ति' इत्यत्र णत्वे प्राप्ते तस्यासिद्धत्वादनुस्वारे परसवर्णे च कृते तस्यासिद्धत्वान्न णत्वम् ।

## १२५ । वा पदान्तस्य । (८-४-५९)

पदान्तस्यानुस्वारस्य यथि परे परसवर्णो वा स्यात् । त्वङ्करोषि—त्वं करोषि । सय्यँन्ता—संयन्ता । सव्ँवत्सर—संवत्सर । यल्ँलोकम्—यं लोकम् । अत्रानुस्वारस्य पक्षेऽनुनासिका यवला ।

## १२६ । मो राजि समः क्वौ । (८-३-२५)

क्विबन्ते राजतौ परे समो मस्य म एव स्यात् । सम्राट् ।

## १२७ । हे मपरे वा । (८-३-२६)

---

मकार । ननु कृञ्धातोर्लट्, झि झोन्त तनादिकृञ्भ्य उ, गुण रपरत्वम् । 'अत उत् सार्वधातुके' उकारस्य यण् । न भकुर्छुरामिति निषेधात् र्वोरुपधाया इति दीर्घो न । कुर्वन्तीति रूपम् । अत्र नकारस्य नश्चापदान्तस्येत्यनुस्वार बाधित्वा परत्वात् रषाभ्यामिति णत्व स्यात् । नच त्रिपाद्यान्नश्चापदान्तस्येत्यपेक्षया रषाभ्यामित्यस्य परत्वात्पूर्वत्रासिद्धमित्यसिद्धत्वात् अनुस्वारे सति परसवर्णे च नकारस्यैव श्रवणमिति वाच्यम् । एवमपि परसवर्णविधिना प्राप्तस्य नकारस्य रषाभ्यामिति णत्वप्राप्तेर्दुर्वारत्वादित्यत आह । **कुर्वन्तीत्यादि** ॥ रषाभ्यामित्यपेक्षया परसवर्णस्य परतया णत्वे कर्तव्ये अनुस्वारस्थानिकपरसवर्णस्य नकारस्यासिद्धत्वान्न णत्वमिति भाव । **वा पदान्तस्य** ॥ अनुस्वारस्य यथि परसवर्ण इत्यनुवर्तते । तदाह । **पदान्तस्येत्यादिना । त्वङ्करोषीति** ॥ त्वम् करोषीति स्थिते मोऽनुस्वार परसवर्णो ङकार । तदभावपक्षे अनुस्वार एव श्रूयते । **अत्रेति** ॥ सम् यन्तेति स्थिते मोऽनुस्वार । तस्य परनिमित्तभूतयकारसवर्ण अनुनासिक एव यकारो भवति । आन्तर्यात् । तथाच सय्यँन्तेति रूपम् । एव सवत्सर इति स्थिते अनुस्वारस्य परसवर्ण अनुनासिको वकार । सव्ँवत्सर इति रूपम् । य लोकमिति स्थिते, अनुस्वारस्य परसवर्णोऽनुनासिको लकार । यल्ँलोकमिति रूपम् । परसवर्णाभावपक्षे तु अनुस्वार एवेत्यर्थ । **मो राजि** ॥ म इति प्रथमान्त मोऽनुस्वार इत्यत म इति स्थानषष्ठ्यन्तमनुवर्तते । सम इत्यवयवषष्ठी । प्रत्ययग्रहणपरिभाषया क्विग्रहणेन क्विप्प्रत्ययान्तलाभ । तदाह । **क्विबन्त इत्यादिना । म एवेति** ॥ नत्वनुस्वार इत्यर्थ । मस्य मविधानमनुस्वारनिवृत्त्यर्थमिति भाव । **सम्राडिति** ॥ राजृ दीप्तौ । सम्पूर्वात् सत्सूद्विषद्रुहेत्यादिना क्विप् । व्रश्चेति षत्वम् । जश्त्वेन डत्वम् । चर्त्वम् । अत्र मोऽनुस्वारो न भवति । **हे मपरे वा** ॥ मोऽनुस्वार इत्यत म इति षष्ठ्यन्तमनुवर्तते । मो राजीत्यत. म इति प्रथमान्तमनुवर्तते । म परो यस्मादिति विग्रह । तदाह । **मपरे इत्यादिना** ॥ ह्मलयतीति

मपरे हकारे परे मस्य म एव स्याद्वा । 'ह्मल्, ह्मल्, चलने'। किम् ह्मलयति–कि ह्मलयति । 'यवलपरे यवला वेति वक्तव्यम्' (वा ४९०२)

## १२८ । यथासंख्यमनुदेशः समानाम् । (१-३-१०)

समसम्बन्धी विधिर्यथासंख्य स्यात् । किँय्ँ ह्य'–कि ह्य. । किँव्ँ ह्वलयति–कि ह्वलयति । किँल्ँ ह्लादयति–कि ह्लादयति ।

## १२९ । नपरे नः । (८-३-२७)

नपरे ह्कारे परे मस्य न स्याद्वा । किन् ह्नुते–कि ह्नुते ।

## १३० । ङ्णोः कुक्टुक्शरि । (८-३-२८)

ङकारणकारयो कुक्टुकावागमौ वा स्त शरि । कुक्टुकोरसिद्धत्वा-

---

ण्यन्ताण्णिच् । 'ज्वल ह्वल ह्मल नमामनुपसर्गाद्वा' इति मित्वाण्णौ मिता ह्रस्व । **यवल-परे** ॥ यवला परा यस्मादिति विग्रह । यवलपरके ह्कारे परे मस्य म एव वा स्यादित्यर्थ । **यथासङ्ख्यम्** ॥ साम्यमिह सङ्ख्यातो विवक्षितम् । अनुदेश विधानम् । समानामिति यदि कर्मणि षष्ठी तर्हि स्थान्यादिभिस्समसङ्ख्याना यत्र विधानम्, यथा एचोऽयवायाव इत्यादौ, तत्रैव यथासङ्ख्य प्रवृत्तिस्स्यात् । 'समूलाकृतजीवेषु हन् कृञ् ग्रह' इत्यत्र न स्यात् । तत्र विधेयस्य णमुल एकत्वात् । अतस्समानामिति सम्बन्धसामान्ये षष्ठी । एवञ्च समूलाद्युपपदाना हनादि-धातूनाञ्च समसङ्ख्यानामुपादानेन एकस्य प्रत्ययस्य विधिरपि समसङ्ख्याकसम्बन्धी विधिरेवेति तत्रापि यथासङ्ख्यप्रवृत्तिर्निर्बाधा । तदाह । **समसम्बन्धी विधिरिति । यथासङ्ख्य-मिति** ॥ सङ्ख्याशब्देनात्र प्रथमत्वद्वितीयत्वादिरूपास्सङ्ख्याघटितधर्मा विवक्षिता । तान् अनति-क्रम्य यथासङ्ख्यम् । ततश्च एचोऽयवायाव इत्यादिषु प्रथमस्य स्थानिन प्रथम आदेश, द्वितीयस्य द्वितीय इत्येवक्रमेण स्थान्यादेशतन्निमित्तादीना समसङ्ख्याकाना क्रमेण अन्वय प्रतिपत्तव्य इति फलित । प्रकृते च यपरके ह्कारे परे मकारस्य यकार, वपरके व, लपरके ल, इति सिद्ध्यति । **किँय्ँ ह्य इति** ॥ मस्य यत्वे रूपम् । ह्य इत्यव्ययम् । पूर्वेद्युरित्यर्थ । यत्वाभावे मोऽनुस्वार । **किव् ह्वलयतीति** ॥ मस्य वत्व, ह्वल चलने, णिच् । **किँल्ँ ह्लादयतीति** ॥ मस्य लत्व, ह्लादी सुखे च, णिच् । **नपरे नः** ॥ हे इति वेति म इति चानुवर्तते । न परो यस्मादिति विग्रह । तदाह । **नपरे हकार इत्यादिना । किन् ह्नुत इति** ॥ ह्नुङ् अप-नयने, मस्य नत्वे रूपम् । तदभावे मोऽनुस्वार । **ङ्णोः कुक्टुक्शरि** ॥ 'हे मपरे वा' इत्यत वेत्यनुवर्तते । कुक्च टुक्चेति समाहारद्वन्द्व । **आगमाविति** ॥ एतच्च आद्यन्तौ टकि-ताविति लभ्यम् । यथासङ्ख्यपरिभाषया ङकारस्य कुक्, णकारस्य टुक् । उभयत्र ककार इत्, उकार उच्चारणार्थ । प्राङ् षष्ठ, सुगण् षष्ठ, इति स्थिते, यथाक्रम कुकि टुकि च तयो. पूर्वावयवत्वेन पदान्तत्वात् जश्त्वमाशङ्क्याह । **कुक्टुकोरिति । चयो द्वितीयाः** ॥

जश्त्वं न । 'चयो द्वितीया शरि पौष्करसादेरिति वाच्यम्' (वा ५०२३)। पौष्करसादिराचार्य । प्राङ्ख्षष्ठ—प्राङ्क्षष्ठ—प्राङ् षष्ठ । सुगणठ्षष्ठ—सुगणट्-षष्ठ—सुगणषष्ठ. ।

## १३१ । डः सि धुट् । (८-३-२९)

डात्परस्य सस्य धुड्वा स्यात् । षट्त्सन्त—षट्सन्त ।

## १३२ । नश्च । (८-३-३०)

नकारान्तात्परस्य सस्य धुड्वा स्यात् । सन्त्स—सन्स ।

## १३३ । शि तुक् । (८-३-३१)

पदान्तस्य नस्य शे परे तुग्वा स्यात् । 'शश्छोऽटि' (सू १२०) इति

---

पौष्करसादिशब्दस्य चयो द्वितीया इत्यर्थभ्रम वारयति । **पौष्करसादिराचार्य इति** ॥ तथाच विकल्प फलतीति भाव । प्राङ्क् षष्ठ इति कुकि रूपम् । चयो द्वितीया इति पक्षे प्राङ् ख् षष्ठ इतिरूपम् । नचात्र खकारस्य खरि चेति चर्त्वम् । खकारारम्भविविसामर्थ्यात् चयो द्वितीया इति, नादिन्याक्रोश इति सूत्रभाष्यपठितमिदम । प्राङ् षष्ठ इति कुगभावे रूपम् । एव टुक्यपि सुगण् ट् षष्ठ इत्यादि । **डस्सि धुट्** ॥ ड इति पञ्चमी । ततश्च तस्मादित्युत्तर-स्येति परिभाषया सीति सप्तमी षष्ठी सम्पद्यते डात्परस्य सस्येति । हे मपरे वेत्यतो वेत्यनुवर्तते । तदाह । **डात्परस्येत्यादिना** ॥ तस्मिन्निति निर्दिष्ट इति नेह भवति । उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् परत्वादिति न्यायात् । धुट् इति चतुर्थधकारनिर्देश । टकार इत् । उकार उच्चारणार्थ । धुट् इति द्वितीयविधौ तत्सामर्थ्याच्चर्त्वन्न स्यात् । अन्यथा तकारमेव विदध्यात् । चतुर्थविधेस्तु न तत्सामर्थ्यम । प्रथमविधौ तस्य चयो द्वितीया इत्या-पत्तौ तन्निवृत्त्या चरितार्थत्वात् । **षट् सन्त इति** ॥ षष् इति षकारस्य जश्त्वेन ड, षड् सन्त इति स्थिते चर्त्वस्यासिद्धत्वात् डात् परत्वात् सस्य धुट आद्यवयव । तस्य चर्त्वेन तकार । चयो द्वितीया इति तु न । चर्त्वस्यासिद्धत्वात् । ततो लक्ष्यभेदात् डस्य चर्त्वेन ट । **नश्च** ॥ सि धुट् इति, वेतिचानुवर्तते । न इति पञ्चमी । तस्मादित्युत्तरस्येति परिभाषया सीति षष्ठी सम्पद्यते । तदाह । **नकारान्तात् परस्येति**। **सन्त्स इति** ॥ धुटि धस्य चर्त्वम् । **शि तुक्** ॥ पूर्वसूत्रात् न इति पञ्चम्यन्तमनुवृत्तमिह षष्ठ्यन्तमाश्रियते । शब्दाविकाराश्रयणात् पदस्येत्यधिकृतम् अवयवषष्ठ्यन्तमाश्रीयते । हे मपरे वेत्यतो वेत्यनुवृत्तम् । तदाह । **पदा-न्तस्य नस्येत्यादिना** ॥ नान्तस्य पदस्येत्युचितम् । उकार उच्चारणार्थ । सन् शम्भुरिति स्थिते नकारस्यान्तावयवस्तुक् । ननु तुग्ग्रहण व्यर्थम् । डस्सि धुडित्यत धुडेवानुवृत्य नकारात् परस्य शस्य विधीयताम् । खरि चेति चर्त्वे सन्त्शम्भुरित्यस्य सिद्धेरित्यत आह । **शश्छो-ऽटीति छत्वविकल्प इति** ॥ शकारस्येति शेष । धुटो विधौ तु तस्य परादित्वात्पदान्तत्वा-भावात् छत्वन्न स्यात् । छत्वविधे पदाविकारस्यत्वेन पदान्तात् झय परस्यैव शस्य तत्प्रवृत्ते-

छत्वविकल्प । पक्षे 'झरो झरि–' (सू ७१) इति चलोप. । सञ्छम्भु – सञ्च्छम्भु –सञ्च्शम्भु –सञ्शम्भु ।

अछौ अचछा अचशा अशाविति चतुष्टयम् ।
रूपाणामिह तुक्छत्वचलोपाना विकल्पनात् ॥

## १३४ । ङमो ह्रस्वादचि ङमुण्नित्यम् । (८-३-३२)

ह्रस्वात्परो यो ङम् तदन्त यत्पद तस्मात्परस्याचो नित्य ङमुडागम स्यात् । प्रत्यङ्ङात्मा । सुगण्णीश । सन्नच्युत ।

---

भाष्ये सिद्धान्तितत्वात्। अन्यथा विस्पष्टो विरफ्शिन्नित्यादावपि शस्य छत्वापत्ते । **पक्ष इति** ॥ कदा चित् झरो झरीति तुकस्तकारस्य श्चुत्वमापन्नस्य लोप इत्यर्थ । **सञ् छम्भुरिति** ॥ तकारस्य चुत्वमापन्नस्य लोपे सति नकारस्य श्चुत्वेन ञकारे रूपम् । **सञ् च् छम्भुरिति** ॥ चुत्वमापन्नस्य तकारस्य लोपाभावे नकारस्य च श्चुत्वे ञकारे रूपम् । तुको जश्त्वन्तु न । जश्त्वे तस्यासिद्धत्वात् । अत एव श्चुत्वोत्तरमपि जश्त्वन्न । **सञ् च् शम्भुरिति** ॥ शस्य छत्वाभावे तकारनकारयोश्चुत्वे च रूपम् । **सञ्शम्भुरिति** ॥ तुक अभावे नकारस्य चुत्वे रूपम् । तदिद रूपचतुष्टय उक्तक्रम श्लोकेन सङ्गृह्णाति । **अछाविति** ॥ तुक्छत्वचलोपाना विकल्पनात् अछौ अचछा अचशा अशाविति रूपाणाञ्चतुष्टयमित्यन्वय । **ङमो ह्रस्वात्** ॥ ङम् प्रत्याहार । ङम इति पञ्चम्यन्तम् । तद्विशेषणत्वात् पदस्येत्यनुवृत्त पञ्चम्यन्ततया विपरिणम्यते । ङम इति च ह्रस्वादिति विशेषणसम्बन्धमनुभूय पदविशेषणत्व भजत् तदन्तपरम् । ङम इति पञ्चमीबलात् अचीति सप्तमी षष्ठ्यर्थे । तदाह । **ह्रस्वात्पर इत्यादिना । ङमुडागम इति** ॥ टकार इत्, उकार उच्चारणार्थ । सञ्ज्ञाया कृत टित्वमानर्थक्यात् तदङ्गन्यायात् ङ्णनैर्भिस्सम्बध्यते । ततश्च ङुट् णुट् नुट् इति त्रय आगमा फलिता । टित्वादच आद्यवयवा यथासख्य प्रवर्तन्ते । हे मपरे वेति वाग्रहणानुवृत्तिशङ्काव्युदासार्थ नित्यग्रहणम् । **प्रत्यङ्ङात्मेति** ॥ प्रत्यङ् आत्मा इति स्थिते आकारात् प्राक् ङुट् । **सुगण्णीश इति** ॥ गण सङ्ख्याने, चुरादि । ण्यन्ताद्विचि णिलोप । नतु क्विप् । अनुनासिकस्य क्वीति दीर्घप्रसङ्गात् । ङमुटि कर्तव्ये णिलोपस्तु न स्थानिवत् । पूर्वत्रासिद्धे न स्थानिवदित्युक्ते । सुगण् ईश इति स्थिते ईकारात् प्राक् णुट् । **सन्नच्युत इति** ॥ सँन् अच्युत इति स्थिते अकारात् प्राक् नुट् । नच परमदण्डिनावित्यत्र परम दण्डिन् औ इति स्थिते प्रत्ययलक्षणेन अन्तर्वर्तिविभक्त्या पदत्वान्नुट् स्यादिति वाच्यम् । उत्तरपदत्वेचापदादिविधाविति प्रत्ययलक्षणप्रतिषेधात् । वस्तुतस्तु उत्तरपदत्वे चेति प्रत्ययलक्षणप्रतिषेधो यत्र उत्तरपदस्य कार्यित्व तत्रैव प्रवर्तते । अन्यथा पदव्यवायेऽपीति निषेधो माषवापेनेत्यत्र न स्यात् । अत परमदण्डिनेत्यत्र ङमुड्वारणाय उभि च पदे इत्यत पदे इत्यनुवर्त्य अजादे पदस्य ङमुडिति व्याख्येयमिति शब्देन्दुशेखरे प्रपञ्चितम् । **समस्सुटि** ॥

## १३५ । समः सुटि । (८-३-५)

समो रु स्यात्सुटि । 'अलोऽन्त्यस्य' (सू ४२)

## १३६ । अत्रानुनासिकः पूर्वस्य तु वा (८-३-२)

अत्र रुप्रकरणे रो पूर्वस्यानुनासिको वा स्यात् ।

## १३७ । अनुनासिकात्परोऽनुस्वारः । (८-३-४)

अनुनासिकं विहाय रो पूर्वस्मात्परोऽनुस्वारागम स्यात् । 'खरवसानयोर्विसर्जनीय' (सू ७६) ।

## १३८ । विसर्जनीयस्य सः । (८-३-३४)

खरि विसर्जनीयस्य स स्यात् । एतदपवादेन 'वा शरि' (सू १५१) इति पाक्षिके विसर्गे प्राप्ते । सम्पुङ्कानां सो वक्तव्य' (वा ४८९२) । सँस्क-

---

सम इति षष्ठ्यन्तम् । 'मतुवसोरुसम्बुद्धौ' इत्यत रुग्रहणमनुवर्तते । तदाह । **समो रुस्स्यात् सुटीति** ॥ रु इत्युकार इत् । अलोऽन्त्यस्येति उपतिष्ठत इति शेष । सम्पूर्वात् करोतेस्तृचि 'सम्परिभ्या करोतौ भूषणे' इति सुडागमे सम स्कर्तेति स्थिते मस्य रुत्वम् । सर् स्कर्तेति स्थिते । **अत्रानुनासिकः** ॥ 'मतुवसो रुसम्बुद्धौ' इति रुत्वविध्यनन्तरमिद पठितम् । अत अत्रेत्यनेन रुप्रकरणे इत्यर्थो गम्यते । पूर्वत्वञ्च रु इत्यपेक्षया ज्ञेयम् । प्रकृतत्वात् । तदाह । **अत्र रुप्रकरणे रो पूर्वस्यानुनासिको वा स्यादिति** ॥ उत्तरसूत्रे अनुनासिकाभावपक्षानुवादादेव सिद्धे वाग्रहण स्पष्टार्थम् । परस्य नित्य रुत्वम्, पूर्वस्य तु अनुनासिकविकल्प इति वैषम्यस्य सिद्धस्यैव द्योतनार्थस्तुशब्दोऽपि स्पष्टार्थ एव । इदमेवाभिप्रेत्य मूले विवरणवाक्ये वाग्रहणन्तु त्यक्तमिति प्रौढमनोरमाया मूलकृतैव उक्तम् । अनेन सूत्रेण सर् इत्यत्र सकारादकार । अनुनासिक सँस्कर्ता । **अनुनासिकात्** ॥ अनुनासिकादिति ल्यब्लोपे पञ्चमी । विहायेति गम्यम् । पूर्वस्येत्यनुवर्तते । पञ्चम्यन्ततया विपरिणम्यते । पूर्वत्वञ्च रुत्वकृतरेफापेक्षया । परत्वञ्च रोर्य पूर्ववर्णस्तदपेक्षया । तदाह । **अनुनासिकं विहायेति** ॥ अनुनासिकाभावपक्षे इत्यर्थ । आगमत्व परशब्दलभ्यम् । ततश्च राकारादकारस्य अनुनासिकाभावपक्षे अकारात् पर अनुस्वारागम । सर्स्कर्ता । अथ रेफस्य विसर्गविधि स्मारयति । **खरवसानयोरिति** । **विसर्जनीयस्य सः** ॥ खरवसानयोरित्यतो मण्डूकप्लुत्या खरीत्यनुवर्तते । एकदेशे स्वरितत्वप्रतिज्ञानात् । केचित्तु विसर्गश्रवणात् खरीत्यार्थिकम् । अवसानस्य तु न सम्बन्ध । व्याख्यानादित्याहु । तदाह । **खरीति** ॥ विसर्जनीयस्य स इति सिद्धे सम्पुङ्कानामिति पुनर्विधान व्यर्थमित्यत आह । **एतदपवादेनेति** ॥ पुनर्विधान वा शरीति पाक्षिकविसर्गबाधनार्थमिति भाव । **सम्पुङ्काना-**

कर्ता। 'समो वा लोपमेके' इति भाष्यम्। लोपस्यापि रुप्रकरणस्थत्वात्—स्वारानुनासिकाभ्यामेकसकारं रूपद्वयम्। द्विसकारं तूक्तमेव। तत्र 'अनचि चतु'(सू ४८) इति सकारस्य द्वित्वपक्षे त्रिसकारमपि रूपद्वयम्। अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानामकारोपरि शर्षु च पाठस्योपसङ्ख्यातत्वेनानुस्वारस्याप्यच्त्वात्। अनुनासिकवतां त्रयाणां 'शरः खयः' (वा ५०१९) इति कद्वित्वे षट्। अनुस्वारवतामनुस्वारस्यापि द्वित्वे द्वादश। एषामष्टाद-

---

मिति ॥ सम् पुम् कान् एतेषां विसर्गस्य सकारो वक्तव्य इत्यर्थः। अनेन वार्तिकेनात्र विसर्गस्य नित्यमेव सत्वमिति शेषः। सँस्स्कर्तेति ॥ अनुनासिकपक्षे रूपम्। संस्स्कर्तेति ॥ अनुस्वारपक्षे रूपम्। उभयत्रापि द्विसकारत्वमेव। समोवेति ॥ समो मस्य सुटि लोपं एके आचार्या इच्छन्तीत्यर्थः। एकशब्दोऽन्यपर्यायः। 'एके मुख्यान्यकेवलाः' इत्यमरः। लोपपक्षेऽपि अनुस्वारानुनासिकाभ्यामेकसकारं रूपद्वयमित्याह। लोपस्यापीति ॥ अत्रानुनासिकः पूर्वस्य तु वेत्यत्र रो पूर्वस्येत्युपलक्षणं रुप्रकरणविधेयस्य लोपस्यापि। अन्यथा रुप्रकरण इत्यर्थकस्य अत्रेत्यस्य वैयर्थ्यात्। एवमनुनासिकात् परोऽनुस्वार इत्यत्र रो पूर्वस्मादित्यपि। ततश्च समो मलोपस्यापि रुप्रकरणस्थतया लोपात्पूर्ववर्तिनः अकारस्य कदाचिदनुनासिकः तदभावपक्षे अकारात् परः अनुस्वारागमः इत्येवमनुस्वारानुनासिकाभ्यामेकसकारं रूपद्वयमित्यर्थः। द्विसकारन्तु उक्तमेवेति ॥ रुत्वपक्षे इति शेषः। ननु लोपपक्ष एव अनचि चेति सुट्सकारस्य द्वित्वेन द्विसकाररूपद्वयस्य सिद्धत्वात् समस्सुटीति रुत्वविधानं व्यर्थमित्यत आह। तत्रेति ॥ तत्र द्विसकाररूपयोः मध्ये रुत्वे सति तत्स्थानिकसकारस्य अनचि चेति द्वित्वपक्षे त्रिसकारमपि रूपद्वयमित्यर्थः। एतदर्थमेव रुत्वविधानमिति भावः। स्कोरिति लोपस्तु न। रुत्वस्यासिद्धत्वात्। नच लोपपक्ष एव सुट्सकारस्य अनचि चेति द्वित्वे प्रथमसकारस्य तेनैव सूत्रेण पुनर्द्वित्वे त्रिसकारमपि रूपद्वयं सिद्धमिति समो रुत्वविधिर्व्यर्थ एवेति वाच्यम्। लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरिति न्यायात्। ननु वर्णसमाम्नाये अनुस्वारस्य पाठाभावात् अनच्त्वात् ततः परस्य सकारस्य कथमनुस्वारपक्षे द्वित्वमित्यत आह। अनुस्वारविसर्गेति ॥ एतच्च हयवरट्सूत्रे भाष्ये स्थितम्। अकारोपरीति ॥ इकाराद्युपरि पाठे पयःसु इत्यत्र इणः परस्य विहितमादेशप्रत्यययोरिति षत्वं स्यादिति भावः। कश्चित्तु इणष्ष इति षत्वं स्यादिति वदन् बभ्राम। तत्र विसर्गस्यैव षत्वविधेः। एवञ्च अनुनासिकपक्षे एकसकारं द्विसकारं त्रिसकारमिति त्रीणि रूपाणि। एवमनुस्वारपक्षेऽपि त्रीणि रूपाणीति स्थितम्। अनुनासिकवतामिति ॥ अनुनासिकपक्षे एकद्वित्रिसकाराणां कद्वित्वे त्रीणि, तदभावे त्रीणीति षडित्यर्थः। ननु ककारस्य अचः परत्वाभावात् कथमनचि चेति द्वित्वमित्यत आह। शरः खय इतीति ॥ शरः परस्य खयो द्वे वा स्त इति वार्तिकार्थः। एवञ्च अनुनासिकपक्षे द्विककाराणि त्रीणि रूपाणि एकककाराणि त्रीणीति षड्रूपाणि स्थितानि। अनुस्वारपक्षे तु द्वादशरूपाणीत्याह। अनुस्वारवतामिति ॥ अनुस्वारस्यापीत्यपिना ककारसङ्ग्रहः।

शाना तकारस्य द्वित्वे वचनान्तरेण पुनर्द्वित्वे चैकतं द्वितं त्रितमिति ॰लसन्धि श्चाशत् । अणोऽनुनासिकत्वेऽष्टोत्तरं शतम् ।

१३९ । पुमः खय्यम्परे । (८-३-६)

पुष्प-

अम्परे खयि पुमशब्दस्य रु स्यात् । व्युत्पत्तिपक्षे 'अप्रत्ययस (सू १५५) इति षत्वपर्युदासात् ≍क≍ पयो प्राप्तौ, अव्युत्पत्तिपक्षे तु पत्व

---

अनुस्वारपक्षे एकद्वित्रिसकाराणा रूपाणामनुस्वारस्य शर्षु पाठस्योपसङ्ख्यातत्वेन शर्त्वात् द्वित्वविकल्पे सति द्व्यनुस्वाराणि त्राणि (३) एकानुस्वाराणि त्रीणि (३) इति षट् ॥ (६) ॥ अथ षण्णामप्येषा शर खय इति ककारस्य द्वित्वविकल्पे सति द्विककाराणि षट् (६) ॥ एकककाराणि षट् (६) इत्यनुस्वारपक्षे द्वादश (१२) इत्यर्थ । एवञ्च अनुनासिकपक्षे षट् (६) अनुस्वारपक्षे द्वादश (१२) इत्यष्टादश रूपाणि । **एषामिति** ॥ उक्ताना अष्टादशाना रूपाणा तकारस्य अचो रहाभ्यामिति द्वित्वविकल्पे सति प्रथमस्य तकारस्य यणोमय इति पुनर्द्वित्वे एकैकस्य एकत द्वित त्रितमिति सङ्कलनया एकतान्यष्टादश (१८) द्वितान्यष्टादश (१८) त्रितान्यष्टादश (१८) इति सङ्कलनया चतुरधिकपञ्चाशद्रूपाणि (५४) सम्पन्नानीत्यर्थ । **अणोऽनुनासिकत्व इति** ॥ अणोऽप्रगृह्यस्यानुनासिक इति तकारादकारस्य अनुनासिकत्वविकल्पे सति आनुनासिक्ये चतुष्पञ्चाशत् (५४) तदभावे चतुष्पञ्चाशत् (५४) इति सङ्कलनया अष्टाधिकशत (१०८) रूपाणि सम्पन्नानीत्यर्थ । **पुमः** ॥ रुग्रहणमनुवर्तते । अम् परो यस्मादिति विग्रह । तदाह । **अम्परे खयीति** ॥ पुमान् कोकिल इति कर्मधारये सुपो धातुप्रातिपदिकयोरिति सुब्लुकि सयोगान्तस्य लोप इति सकारलोपे पुम् कोकिल इति स्थिते मस्य रुत्वम् अनुनासिकानुस्वारविकल्प विसर्ग सम्पुङ्कानामिति स । ननु विसर्जनीयस्य स इत्येव सिद्धे सम्पुङ्कानामित्यत्र पुङ्ग्रहण व्यर्थमित्यत आह । **व्युत्पत्तीत्यादि** ॥ ≍क≍पयो प्राप्तौ सम्पुङ्कानामिति स इत्यन्वय । विसर्जनीयस्य स इति सत्वापवाद कुप्वो ≍क ≍पो चेति विधि बाधितु पुङ्ग्रहणमित्यर्थ । ननु 'इदुदुपधस्य चाप्रत्ययस्य' इति षत्वविधि कुप्वोरित्यस्यापवाद । अतस्त षत्वविधि बाधितु पुङ्ग्रहणमित्येव वक्तुमुचितमित्यत आह । **अप्रत्ययस्येति षत्वपर्युदासादिति** ॥ पूजो डुम्सुन्नित्यौणादिकप्रत्ययस्यमकारस्यानिकत्वात् विसर्गस्येति भाव । ननु उणादय अव्युत्पन्नानि प्रातिपदिकानीति आयनेयीति सूत्रस्थभाष्यरीत्या औणादिकप्रत्ययान्तेषु प्रकृतिप्रत्ययविभागाभावात् कथमिहाप्रत्ययस्येति पर्युदास इत्यत आह । व्युत्पत्तिपक्ष इति । औणादिकशब्देषु प्रकृतिप्रत्ययविभागव्युत्पादनमस्तिनास्तीति पक्षद्वयमादेशप्रत्यययोरिति सूत्रभाष्ये स्थितम् । तत्र व्युत्पत्तिपक्षे पुसशब्दस्य डुम्सुन् प्रत्ययान्ततया तत्र मकारस्थानिकविसर्गस्य अप्रत्ययस्येति पर्युदासेन इदुदुपधस्यचाप्रत्ययस्येति षत्वस्य तत्र न प्रसक्ति । अत तत्र कुप्वोरितिविधिं बाधितु सम्पुङ्कानामिति पुङ्ग्रहणमित्यर्थ । **अव्युत्पत्तीति** ॥ औणादिकशब्देषु प्रकृतिप्रत्ययविभागाभावपक्षे अप्रत्ययस्येति पर्युदासस्यात्राप्रसक्तेरिदुदुपधस्येति प्रसक्त षत्व बाधितु सम्पुङ्कानामिति पुङ्ग्रहणमित्यर्थ । पुंस्कोकिल

प्राप्तौ। सम्पुङ्कानाम्–' (वा ४८९२) इति स। पुँस्कोकिल–पुस्कोकिल। पुँस्पुत्र–पुस्पुत्र। 'अम्परे' किम। पुक्षीरम। 'खयि' किम। पुदास। 'ख्याञादेशे न' (वा १५९१)। पुंख्यानम।

## १४०। नश्छव्यप्रशान्। (८-३-७)

अम्परे छवि नकारान्तस्य पदस्य रु स्यात्। न तु प्रशान्शब्दस्य। विसर्ग। सत्वम। श्चुत्वम्। शार्ङ्गिँश्छिन्धि–शार्ङ्गिंश्छिन्धि। चक्रिँस्त्रायस्व–चक्रिंस्त्रायस्व। पदस्य किम। हन्ति। 'अम्परे' किम्। सन्त्सरु। त्सरु खड्गमुष्टि। 'अप्रशान' किम। प्रशान्तनोति।

## १४१। नॄन्पे। (८-३-१०)

'नॄन्' इत्यस्य रु स्याद्वा पकारे परे।

---

इत्यनुनासिकपक्षे रूपम्। पुस्कोकिल इत्यनुस्वारपक्षे रूपम्। ननु 'चक्षिङ व्यक्तायां वाचि' अस्मात् ल्युट्, अनदेश, चक्षिङ ख्याञ, पुस ख्यान पुङ्ख्यानमित्यत्रापि पुमो मस्य रुत्व स्यादित्यत आह। **ख्याञादेशे नेति** ॥ भाष्ये 'चक्षिङ ख्याञ्' इति पठित्वा पूर्वत्रासिद्धमित्यधि-द्धकाण्डे रषाभ्यामिति णत्वविध्यनन्तर 'ख्शाञश्शस्य यो वा' इति पठितमिति वक्ष्यते। एवञ्च यत्वस्यासिद्धतया खकारस्य अम्परकत्वाभावात् 'पुम खयि' इति रुत्वन्नेत्यर्थ। **पुंख्यान-मिति** ॥ 'मोऽनुस्वार' 'वा पदान्तस्य' इति परसवर्णविकल्प। नच वर्जने प्रतिषेध असनयो श्चेति अनादेशे परे प्रतिषेधात् कथमत्र ख्याञादेश इति वाच्यम्। ख्यादेशप्रयोजनपरवार्तिके पुङ्ख्यानमित्यादिप्रयोगात्तदुपपत्ते। **नश्छव्यप्रशान्** ॥ न इति पष्ठ्यन्त पदस्येत्यधि-कृतस्य विशेषणम्। तदन्तविधि। अम्परे इत्यनुवर्तते, रु इति च। तदाह। **अम्पर इत्यादिना** ॥ अप्रशानिति पष्ठ्यर्थे प्रथमा। तदाह। **नत्विति। विसर्ग इति** ॥ शार्ङ्गिन् छिन्धि, चक्रिन् त्रायस्व, इति स्थिते नकारस्यानेन रुत्व अनुनासिकानुस्वारविकल्प। ततो विसर्ग सत्व, सस्य श्चुत्वेन शकार इत्यर्थ। **शार्ङ्गिँश्छिन्धीति** ॥ अनुनासिकपक्षे रूपम्। **शार्ङ्गिंश्छिन्धीति** ॥ अनुस्वारपक्षे रूपम्। एवञ्चक्रिँस्त्रायस्वेत्यनुनासिकपक्षे। अनुस्वारपक्षे तु चक्रिंस्त्रायस्वेति। त्रैङ् पालने। ङित्त्वादात्मनेपद। त्राहीति प्राचीनग्रन्थस्तु प्रामा-दिक। त्रायत इति त्रा त्रा इवाचरति त्रा इत्याचारक्विबन्तात् लोट् परस्मैपदमिति वा कथञ्चित् समाधेयम्। **प्रशानिति** ॥ प्रपूर्वात् शाम्यते क्विप्। अनुनासिकस्य क्वीति दीर्घ। मो नो धातोरिति मस्य न। तस्यासिद्धत्वान्नलोपो न। **नॄन्पे** ॥ नॄन् इति द्वितीयान्त शब्दस्वरूपपर षष्ठ्यन्तम्। षष्ठ्यास्सौत्रो लुक्। नलोपाभावोऽपि सौत्र एव। मतुवसोरु इत्यत रु इत्यनुवर्तते। उभयथर्क्ष्वित्यत उभयथेत्यनुवर्तते। कदाचित् भवति कदाचिन्न-भवतीत्येवमुभयथा रु प्रत्येतव्य इत्यर्थ। विकल्प इति यावत्। तदाह। **नॄनित्यस्येत्या-**

## १४२ । कुप्वोः ≍क≍पौ च । (८-३-३७)

कवर्गे पवर्गे च परे विसर्जनीयस्य क्रमाज्जिह्वामूलीयोपध्मानीयौ स्तः । चाद्विसर्गः । येन नाप्राप्तन्यायेन 'विसर्जनीयस्य सः' (सू १३८) इत्यस्यापवादोऽयम् । न तु 'शर्परे विसर्जनीयः' (सू १५०) इत्यस्य । तेन 'वासः क्षौमम्' इत्यादौ विसर्ग एव । नॄँ≍पाहि—नॄं≍पाहि—नॄँः पाहि—नॄंः पाहि—नॄन्पाहि ।

## १४३ । कानाम्रेडिते । (८-३-१२)

दिना ॥ अलोऽन्त्यस्य । नॄन् पाहीति स्थिते नस्य रुत्वम् । अनुनासिकानुस्वारविकल्पः । खरवसानयोरिति रेफस्य नित्यं विसर्गे प्राप्ते । **कुप्वोः≍क≍पौ च** ॥ कुप्वो इति च्छेदः । ओसस्सस्य रुत्वे तस्य खर्परत्वात् विसर्गः । जिह्वामूलीयस्य शर्षूपसङ्ख्यातत्वेन शत्वात् तस्य च विसर्गस्य खर्परे शरि वा विसर्गलोपो वक्तव्य इति लोपः । अत सूत्रे कुप्वोरिति न विसर्गश्श्रूयते । विसर्जनीयस्य स इत्यतो विसर्जनीयस्येत्यनुवर्तते । तदाह । **कवर्गे इत्यादिना** ॥ क्रमादिति यथासङ्ख्यसूत्रलभ्यम् । **चाद्विसर्ग इति** ॥ शर्परे विसर्जनीय'' इत्यतो विसर्जनीय इत्यनुकृष्यत इत्यर्थः । चकारः पक्षे विसर्गसमुच्चयार्थ इति यावत् । अन्यथा जिह्वामूलीयोपध्मानीयाभ्यां विसर्गस्य बाध एव स्यादिति भावः । एवञ्च प्रकृते पकारे परे विसर्गस्य सत्वं बाधित्वा कदाचिदुपध्मानीयः कदाचिद्विसर्गः । तयोः उच्चारणे भेदः । इहादेशयोः कपावुच्चारणार्थौ, नतु विधेयकोटिप्रविष्टौ । ननु कुप्वोरिति जिह्वामूलीयोपध्मानीयविसर्गविधिना यथा विसर्जनीयस्य सत्वं बाध्यते, तथा शर्परे विसर्जनीय इति केवलविसर्गविधिरपि बाध्येत । तथाच वासः क्षौममित्यत्रापि कुप्वोरिति कदाचित् जिह्वामूलीयः कदाचिद्विसर्गश्च स्याताम् । इष्यते तु केवलविसर्गः इत्यत आह । **येन नाप्राप्तेति** ॥ 'येन नाप्राप्ते यो विधिरारभ्यते स तस्यापवादः' । इति न्यायः । प्राप्तेति भावे क्तः । येनेति कर्तरि तृतीया । कर्तृकर्मणोरिति षष्ठी तु न भवति । नलोकेति निषेधात् । द्वौ नञावावश्यकत्वं द्योतयतः । यस्य विधेरवश्यं प्राप्तौ सत्यामित्यर्थः । अनेन न्यायेन कुप्वोरिति विधिः विसर्जनीयस्य स इत्यस्यैवापवादः । सत्वे प्राप्त एव तदारम्भात् । शर्परे विसर्जनीय इत्यस्य तु कुप्वोरिति नापवादः । कः करोतीत्यादौ शर्परे खरीत्यप्राप्तेऽपि कुप्वोरित्यस्यारम्भादित्यर्थः । **तेनेति** ॥ वासः क्षौममित्यादौ कुप्वोरिति विधिना शर्परे इत्यस्य बाधाभावेन शर्परे खरीति केवलविसर्ग एव भवतीत्यर्थः । नॄँ≍पाहि, नॄं≍ पाहि, इत्युपध्मानीयपक्षे आनुनासिक्ये अनुस्वारे च सति रूपद्वयम् । नॄँः पाहि, नॄंः पाहि, इति विसर्गपक्षे अनुनासिकानुस्वाराभ्यां रूपद्वयम् । नॄन् पाहीति रुत्वाभावे रूपम् । तथाच पञ्च रूपाणि । सूत्रे पे इत्यकारः उच्चारणार्थः । तथाच नॄन् पुनातीत्यादावपि पञ्च रूपाणि भवन्ति । **कानाम्रेडिते** ॥ कानिति द्वितीयान्तं स्वरूपपरं षष्ठ्यन्तम् । षष्ठ्याः सौत्रो लुक् । नलोपाभावोऽपि सौत्र एव । अलोऽन्त्यपरिभाषया कान्शब्दान्तस्येति लभ्यते ।

कान्नकारस्य रु स्यादाम्रेडिते परे । 'सम्पुङ्कानाम्' (वा ४८९२) इति स । यद्वा ।

## १४४ । कस्कादिषु च । (८-३-४८)

ᳲकᳲपयोरपवाद । इण्विण उत्तरस्य विसर्गस्य ष स्यात् । अन्यस्य तु स । काँस्कान्—कांस्कान् । कस्क । कौतस्कुत । सर्पिष्कुण्डिका । धनुष्कपालम् । आकृतिगणोऽयम् ।

## १४५ । संहितायाम् । (६-१-७२)

इत्यधिकृत्य ।

## १४६ । छे च । (६-१-७३)

---

रु इत्यनुवर्तते । तदाह । **कान्नकारस्येत्यादिना** । **सम्पुङ्कानामिति** ॥ कान् इत्यस्य वीप्साया द्विर्वचने कान् कान् इति स्थिते प्रथमनकारस्य रुत्वे अनुनासिकानुस्वारविकल्प । रेफस्य विसर्ग । तस्य विसर्जनीयस्य स इति सत्व बाधित्वा कुप्वोरिति प्राप्तौ सम्पुङ्कानामिति सत्वमित्यर्थ । वस्तुतस्तु सम्पुङ्कानामिति वार्त्तिके कान् इति निष्फलमित्याह । **यद्वेति** ॥ **कस्कादिषु च** ॥ इण इत्यनुवर्तते । इण इति पञ्चम्यन्तम् । विसर्जनीयस्य स इत्यतो विसर्जनीयस्येत्यनुवर्तते । कस्कादिष्विति विषयसप्तमी । कस्कादिगणे इण परस्य विसर्गस्य षः स्यादित्यर्थ । सोऽपदादाविव्यत स इति प्रथमान्तमनुवर्तते । कस्कादिषु अनिण परस्य विसर्गस्य सत्व स्यादित्यर्थ । तदेव वाक्यद्वय सम्पद्यते । कस्कादिषु तथाविधानामेव कृतषत्वसत्वाना निर्देशादय विषयविभाग । **ᳲकᳲपयोरपवाद इति** ॥ ᳲकᳲपयोरित्युपलक्षण कुप्वोरिति विहितविसर्गस्यापि । **अन्यस्य तु स इति** ॥ प्रकृते विसर्गस्य इण परत्वाभावात् न षत्वम् । किन्तु सत्वमित्यर्थ । काँस्कानिति अनुनासिकपक्षे रूपम् । कांस्कानिति अनुस्वारपक्षे रूपम् । अथ कस्कादिगण पठति । **कस्क इत्यादिना** ॥ वीप्साया द्वित्वे पूर्वखण्डे अकारात् परस्य विसर्गस्य सत्वम् । कᳲ कोऽत्र भो इति प्रयोगे तु सहिताविरहात् सत्वाभाव । कस्कादिषु चेत्यस्य 'तयोर्य्वावचि सहितायाम्' इति सहिताविकारस्थत्वादित्याहु । **कौतस्कुत इति** ॥ वीप्साया द्विर्वचने कुत कुत आगत इत्यर्थे तत आगत इत्यण् । अव्ययाना भमात्रे टिलोप । अतएव निपातनादव्ययात्त्यबिति न । **सर्पिष्कुण्डिकेति** ॥ अत्र इण परत्वात् षत्वम् । एव धनुष्कपाल, चतुष्कपालमित्यत्रापि । ननु कस्कादिगणे कास्कानित्यस्य पाठाभावात् कथ सत्वमित्यत आह । **आकृतिगणोऽयमिति** ॥ एवञ्च कस्कादित्वादेव कास्कानित्यत्र सत्वसिद्धेस्सम्पुङ्कानामित्यत्र कान् ग्रहण न कर्तव्यमिति भाव । **संहितायाम् । इत्यधिकृत्येति** ॥ छे चेत्यादि विधीयते इति शेष । यद्यप्येतदिको यणचीत्यत्रैव वक्तव्य, तथापि सूत्रक्रमानुरोधादिहोक्तम् । **छे च** ॥

ह्रस्वस्य छे परे तुगागमः स्यात्संहितायाम् । चुत्वस्यासिद्धत्वाज्जश्त्वेन द् । ततश्चर्त्वस्यासिद्धत्वात्पूर्वं चुत्वेन ज् । तस्य चर्त्वेन च् । चुत्वस्यासिद्धत्वात् 'चोः कुः' (सू ३७८) इति कुत्वं न । स्वच्छाया । शिवच्छाया ।

### १४७ । आङ्माङोश्च । (६-१-७४)

एतयोश्छे परे तुक्स्यात् । 'पदान्ताद्वा' (सू १४९) इति विकल्पापवादः । आच्छादयति । माच्छिदत् ।

### १४८ । दीर्घात् । (६-१-७५)

दीर्घाच्छे परे तुक्स्यात् । । दीर्घस्यायं तुक्, न तु छस्य । '–सेनासुराच्छाया–' (सू ८२८) इति ज्ञापकात् । चेच्छिद्यते ।

### १४९ । पदान्ताद्वा । (६-१-७६)

ह्रस्वस्य पितीत्यतः ह्रस्वस्येति तुगिति चानुवर्तते । संहितायामित्यधिकृतम् । तदाह । **ह्रस्वस्येति** ॥ तुकः ककार इत् । उकार उच्चारणार्थः । कित्त्वात् ह्रस्वस्यान्तावयवः । स्वस्य छायेति षष्ठीसमासे सुब्लुकि वकारादकारस्य तुकि स्वत् छायेति स्थिते वस्तुगत्या प्रक्रियाक्रमं दर्शयति । **चुत्वस्येत्यादिना चुत्वेन जः इत्यन्तेन** ॥ ननु स्वच् छायेति स्थिते तुको ह्रस्वावयवस्य पदान्तत्वात् तत्स्थानिकचकारस्य चोः कुरिति कुत्वं स्यादित्याशङ्क्याह । **चुत्वस्येति** । **आङ्माङोश्च** ॥ छे तुगित्यनुवर्तते । तदाह । **एतयोरिति** ॥ आङ्माङोरित्यर्थः । ननु दीर्घादित्येव सिद्धे किमर्थमिदमित्यत आह । **पदान्ताद्वेति विकल्पापवाद इति । आच्छादयति । माच्छिददिति** ॥ तुकि पूर्ववत् प्रक्रिया । **दीर्घात्** ॥ छे तुगित्यनुवर्तते । तदाह । **दीर्घात् छे परे तुक् स्यादित्यादिना** ॥ 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति छकारस्य तुक् अन्तावयवस्स्यात् । ततश्च छिदिधातोर्यङि, द्वित्वे, हलादिशेषे, अभ्यासचर्त्वे, गुणो यङ्लुकोरिति अभ्यासगुणे, तङि, चे छिद्यते इति स्थिते, छकारस्यान्त्यावयवे तुकि, तस्य चुत्वेन चकारे सति, तत्पूर्वस्य छकारस्य खरि चेति चर्त्वेन चकारे सति, चेच्चिद्यत इति एकारात् द्विचकारमेव रूपं स्यात्, छकारो न श्रूयेतेत्यत आह । **दीर्घस्यायं तुगिति** ॥ ततश्च छकारात् प्राक् दीर्घस्योपरि तुकि जश्त्वचुत्वचर्त्वेषु चेच्छिद्यत इति भवति । छकारस्य खर्परकत्वाभावाच्चर्त्वं न भवतीति चकारात् छकारश्रवणं निर्बाधम् । ननु दीर्घस्यायं तुगिति कुत इत्यत आह । **सेनेति** ॥ उत्तरसूत्रे पदान्ताद्दीर्घात् छे तुग्विकल्पविधानादिदं सूत्रमपदान्तविषयमभिप्रेत्य उदाहरति । **चेच्छिद्यत इति** ॥ **पदान्ताद्वा** ॥ तुक्, छे, दीर्घात्, इत्यनुवर्तते । तदाह । **दीर्घात् पदान्तादित्यादिना** ॥ अयमपि

दीर्घात्पदान्ताच्छे परे तुग्वा स्यात्। लक्ष्मीच्छाया—लक्ष्मीछाया।

। इति हल्सन्धिप्रकरणम्।

## ॥ अथ विसर्गसन्धिप्रकरणम्॥

'विसर्जनीयस्य सः' (सू १३८)। विष्णुस्त्राता।

### १५०। शर्परे विसर्जनीयः। (८-३-३५)

शर्परे खरि विसर्जनीयस्य विसर्जनीयः। न त्वन्यत्। कः त्सरुः। 'घनाघनः क्षोभणः' इह यथायथं सत्वं जिह्वामूलीयश्च न।

### १५१। वा शरि (८-३-३६)

शरि परे विसर्जनीयस्य विसर्जनीय एव वा स्यात्। हरिः शेते—हरिश्शेते। 'खर्परे शरि वा विसर्गलोपो वक्तव्यः' (वा ४९०६)। राम स्थाता—रामः स्थाता। हरि स्फुरति—हरिः स्फुरति। पक्षे विसर्गे सत्वे च त्रैरूप्यम्।

---

तुक् दीर्घस्यैव नतु छस्य। उक्तज्ञापकात्। **इति हल्सन्धिः।** **विसर्जनीयस्य सः॥** हल्सन्धिनिरूपणे प्रसङ्गादिदं व्याख्यानमपि प्रकरणानुरोधात् पुनरुपन्यस्तं विसर्जनीयपदानुवृत्तिप्रदर्शनार्थम्। **विष्णुस्त्रातेति॥** विष्णुशब्दात् सुप्रत्यये तस्य रुत्वे विसर्गे सति विष्णुः त्रातेति स्थिते सत्वम्। **शर्परे विसर्जनीयः॥** विसर्जनीयस्येत्यनुवर्तते। खरवसानयोरित्यतः खर्ग्रहणं मण्डूकप्लुत्या अनुवर्तते। शर् परो यस्मादिति बहुव्रीहिः। खर् विशेष्यम्। तदाह। **शर्परे खरीति॥** विसर्गस्य विसर्गविधौ फलमाह। **नत्वन्यदिति॥** विसर्गस्य विसर्गविधानं तदितरपरिसङ्ख्यानार्थमिति भावः। किन्तदन्यदित्यत आह। **इह यथायथमिति॥** 'यथास्वे यथायथम्' इति निपातितम्। यथासम्भवमित्यर्थः। कः त्सरुरित्यत्र सत्वं, घनाघनः क्षोभणः इत्यत्र कुप्वोरिति जिह्वामूलीयश्च न भवतीत्यर्थः। तथाच सत्वस्य कुप्वोरित्यस्य चायमपवाद इत्युक्तं भवति। **वा शरि॥** विसर्जनीयस्येति विसर्जनीय इति चानुवर्तते। विसर्गस्य विसर्गविधानञ्च तस्य सत्वपरिसङ्ख्यानार्थम्। वाग्रहणाच्च सत्वपरिसङ्ख्यानं पाक्षिकम्। तदाह। **शरि परे इत्यादिना। हरिः शेत इति॥** विसर्गस्य विसर्जनीयपक्षे सत्वपरिसङ्ख्याने रूपम्। **हरिश्शेत इति॥** विसर्गस्य विसर्गविध्यभावपक्षे सत्वे सति सस्य श्चुत्वेन शकारे रूपम्। **खर्परे शरि॥** खर् परो यस्मादिति बहुव्रीहिः। शर् विशेष्यम्। खर्परके शरि परे विसर्गस्य लोपविकल्पो वक्तव्य इत्यर्थः। लोपाभावपक्षे वा शरीति भवति। **रामस्थातेति॥** रामः स्थातेति स्थिते विसर्गलोपे अविसर्गमेकसकारं रूपम्। एवं हरिस्फुरतीत्यत्रापि। **पक्षे इति॥** विसर्गस्य लोपाभावपक्षे वा शरीति विसर्गे सति सविसर्गमेकसकारं रूपम्। तदुभयाभावे तु सत्वे सति द्विसकारं रूपमिति रूपद्वयम्। ततश्च लोपपक्षसिद्धौ विसर्गैकसकार

'कुप्वो ≍क≍पौ च' (सू १४२)। क≍ करोति—क करोति। क≍ खनति—क खनति। क≍ पचति—क पचति। क≍ फलति—क फलति।

## १५२। सोऽपदादौ। (८-३-३८)

विसर्जनीयस्य स स्यादपदाद्यो कुप्वो परयो। 'पाशकल्पककाम्येष्विति वाच्यम्' (वा ५०३३)। पयस्पाशम्। यशस्कल्पम्। यशस्कम्। यशस्काम्यति। 'अनव्ययस्येति वाच्यम्' (वा ४९०१)। प्रात कल्पम्। 'काम्ये रोरेवेति वाच्यम्'। (वा ४९०२)। नेह। गी काम्यति।

## १५३। इणः षः। (८-३-३९)

इण परस्य विसर्गस्य षकार स्यात्पूर्वविषये। सर्पिष्पाशम्। सर्पिष्कल्पम्। सर्पिष्कम्। सर्पिष्काम्यति।

## १५४। नमस्पुरसोर्गत्योः। (-८-३-४०)

---

रूपसङ्कलनया त्रीणि रूपाणीत्यर्थ। **कुप्वोः≍क≍पौ च** ॥ हल्सन्धिनिरूपणे व्याख्यातमप्येतत् प्रकरणानुरोधात् पुनरुपन्यस्तम्। क≍ करोतीति जिह्वामूलीयपक्षे। क करोतीति विसर्गपक्षे। एवमग्रेऽपि। **सोऽपदादौ** ॥ कुप्वोरित्यनुवर्तते। अपदादाविति तद्विशेषणम्। द्वित्वे एकवचनमार्षं प्रत्येकाभिप्राय वा एकवचनम्। विसर्जनीयस्येत्यप्यनुवर्तते। तदाह। **विसर्जनीयस्येत्यादिना** ॥ कुप्वोरित्यस्यायमपवाद। **पाशकल्पक** ॥ एतद्वार्तिकं ग्रन्थकृता न धृतम्। **पयस्पाशमिति** ॥ याप्ये पाशप् कुत्सित पय इत्यर्थ। **यशस्कल्पमिति** ॥ ईषदसमाप्तौ कल्पप्। ईषदसमाप्त यश इत्यर्थ। **यशस्कमिति** ॥ अज्ञाते कुत्सित इत्यादिना क। **यशस्काम्यतीति** ॥ यश आत्मन इच्छतीत्यर्थे सुप आत्मन इत्यनुवृत्तौ काम्यच्चेति काम्यच्। सनाद्यन्ता इति धातुत्वाल्लडादय। **अनव्ययस्य** ॥ सोऽपदादाविति विधि अव्ययविसर्गस्य न भवतीत्यर्थ। **प्रातःकल्पमिति** ॥ ईषदसमाप्तौ कल्पप्। ईषदसमाप्त प्रात काल इत्यर्थ। अधिकरणशक्तिप्रधानस्यापि प्रातश्शब्दस्य वृत्तिविषये शक्तिमत्प्रधानत्वन्नविरुध्यते। दोषाभूतमह दिवाभूता रात्रिरिति वत्। **काम्ये रो** ॥ काम्यप्रत्यये परत रुस्थानिकस्यैव विसर्गस्य सोऽपदादाविति विधिर्भवतीत्यर्थ। **गी काम्यतीति** ॥ गिरमात्मनइच्छतीत्यर्थे काम्यजादि पूर्ववत्। गॄ धातो क्विपि 'ॠत इद्धातो' इति इत्वे रपरत्वे रेफस्य विसर्ग। तस्य च रुस्थानिकत्वाभावान्नसत्वम्। किन्तु कुप्वोरित्येव भवतीत्यर्थ। **इणष** ॥ इण इति पञ्चमी। परस्येत्यध्याहार्यम्। विसर्जनीयस्येत्यनुवर्तते। तदाह। **इणःपरस्येति। पूर्वविषये इति** ॥ अत्र कुप्वोरिति अपदादाविति अनव्ययस्येति काम्ये रोरेवेति च सम्बध्यत इति भाव। तेन उच्चै कल्प, दो पाश, गी काम्यतीत्यादौ न षत्वमिति भाव। सर्पिष्पाशमित्यादौ पूर्ववत् पाशबादि। **नमस्पुरसोः** ॥ इत उत्तरमपदादाविति न सम्ब-

गतिसञ्ज्ञयोरनयोर्विसर्गस्य स कुप्वो परयो । नमस्करोति । साक्षात्प्रभृतित्वात्कृञो योगे विभाषा गतिसञ्ज्ञा । तदभावे नम करोति । 'पुरोऽव्ययम्' (सू ७६८) इति नित्यं गतिसञ्ज्ञा । पुरस्करोति । अगतित्वान्नेह । पू पुरौ पुर प्रवेष्टव्या ।

## १५५ । इदुदुपधस्य चाप्रत्ययस्य । (८-३-४१)

इकारोकारोपधस्याप्रत्ययस्य विसर्गस्य ष स्यात्कुप्वो । निष्प्रत्यूहम् । आविष्कृतम् । दुष्कृतम् । 'अप्रत्ययस्य' किम् । अग्नि करोति । वायु करोति ।

च्यते । विसर्जनीयस्य स इति कुप्वोरिति चानुवर्तते । तदाह । **गतिसञ्ज्ञयोरित्यादिना** ॥ कुप्वोरित्यस्यायमपवाद । **नमस्करोतीति** ॥ नमस इति राकारस्य रुत्वे विसर्गे तस्य कुप्वोरिति विवि बाधित्वा अनेन सत्वम् । ननु प्रादिषु पाठाभावात् कथन्नमश्शब्दस्य गतित्वमित्यत आह । **साक्षादिति । विभाषेति** ॥ साक्षात् प्रभृतीनि चेत्यत्र विभाषा कृञीत्यतो विभाषेत्यनुवृत्तेरिति भाव । **तदभाव इति** ॥ गतित्वाभावपक्षे कुप्वोरिति जिह्वामूलीये सति नमः करोतीति रूपमित्यर्थ । **पुरः प्रवेष्टव्या इति** ॥ 'पॄ पालनपूरणयो' भ्राजभासेत्यादिना क्विप्, उदोष्ठ्यपूर्वस्येत्युत्व, रपरत्व, ततो जासि अनव्ययत्वेन गतित्वाभावान्न सत्वम् । अनव्ययत्वसूचनार्थमेव पू पुर इत्युक्तम् । **इदुदुपधस्य** ॥ विसर्जनीयस्येत्यनुवर्तते । इदुदुपधस्येति तद्विशेषणम् । इदुतौ उपधे यस्येति बहुव्रीहि । कुप्वोरिति चानुवर्तते । तदाह । **इकारोकारेति । अप्रत्ययस्येति** ॥ प्रत्ययावयवभिन्नस्येत्यर्थ । प्रत्ययभिन्नस्य विसर्गस्येत्यर्थे तु कविभि कृतमित्यत्रापि षत्व स्यात् । तत्र भिस प्रत्ययत्वेऽपि विसर्गमात्रस्य प्रत्ययत्वाभावात् । अत्र इदुद्भ्यामप्रत्ययस्येत्येतावतैव इदुद्भ्यामुत्तरस्य विसर्गस्येत्यर्थस्य सिद्धत्वादुपधाग्रहण न कर्तव्यमिति हयवरट् सूत्रे भाष्ये स्थितम् । "उपधाग्रहणन्नकरिष्यते । इदुद्भ्यान्तु पर विसर्जनीय विशेषयिष्याम" इति । **निष्प्रत्यूहमिति** ॥ प्रत्यूहो विघ्न तस्याभाव निष्प्रत्यूह । अर्थाभावे अव्ययीभाव । **आविष्कृतमिति** ॥ 'प्रकाशे प्रादुराविस्स्यादित्यमर' । **दुष्कृतमिति** ॥ दुस् दुरिति प्रादौ पठितम् । तत्र प्रथमस्य सान्तस्य षत्व निर्विवादम् । रेफान्तस्य तु इदुदुपधस्य सकारस्य यो विसर्जनीय इति हयवरट्सूत्रस्थभाष्यसम्मतपक्षान्तरे षत्वन्न भवति । तत्र विसर्जनीयस्य सकारस्थानिकत्वाभावात् । **अग्निः करोतीति** ॥ विसर्गस्य व्यपदेशिवद्भावेन प्रत्ययावयवत्त्वादिति भाव । ननु मातृशब्दात् पञ्चम्येकवचन ङसि । ऋत उदिति ऋकारस्य अकारस्य च उकार एकादेश । रपरत्वम् । मातुर् स् इति स्थिते रात् सस्येति सलोप । मातु कृपेत्यत्रापि षत्व स्यात् । उर् इत्येकादेशस्य पूर्वान्तत्वेन अप्रत्ययतया तदवयवरेफस्थानिकविसर्गस्य प्रत्ययावयवत्वाभावात् । नच उ इत्यस्यैव एकादेशतया पूर्वान्तत्वेऽपि रेफस्य प्रत्ययावयवत्वमस्तीति वाच्यम् । उरण्रपर इत्यत्र आद्यन्तौ टकितावित्यत अन्तग्रहणानुवृत्तिमङ्गीकृत्य रेफस्य एकादेशान्तताया भाष्ये सिद्धान्तितत्वात् । अत एव च रदाभ्यामिति

## १५९। नित्यं समासेऽनुत्तरपदस्थस्य। (८-३-४५)

इसुसोर्विसर्गस्यानुत्तरपदस्थस्य समासे नित्य ष स्यात्कुप्वो परयो। सर्पिष्कुण्डिका। 'अनुत्तरपदस्थस्य' इति किम्। परमसर्पि कुण्डिका। कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थो व्यपेक्षाया नित्यार्थश्च।

## १६०। अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य। ८-३-४६

अकारादुत्तरस्यानव्ययस्य विसर्गस्य समासे नित्य सकारादेश स्यात्करोत्यादिषु परेषु। न तूत्तरपदस्थस्य। अयस्कार। अयस्काम। अयस्कंस। अयस्कुम्भ। अयस्पात्रम्। अयस्सहिता कुशा। अयस्कुशा। अयस्कर्णी। 'अत' किम्। गी कार। 'अनव्ययस्य' किम्। स्व काम। 'समासे' किम्। यश करोति। 'अनुत्तरपदस्थस्य' किम्। परमयश कार।

## १६१। अधश्शिरसी पदे। (८-३-४७)

---

षत्वापत्ते। **नित्य समासे** ॥ इसुसोरित्यनुवर्तते, कुप्वोरिति, विसर्जनीयस्येति, च। तदाह। **इसुसोरित्यादिना। सर्पिष्कुण्डिकेति** ॥ सर्पिष कुण्डिकेति विग्रह। समासे व्यपेक्षालक्षणसामर्थ्यस्यापि सत्वात् 'इसुसोस्सामर्थ्ये' इति षत्वविकल्पे प्राप्ते वचनमिदम्। **परमसर्पिःकुण्डिकेति** ॥ अत्र विसर्गस्य उत्तरपदस्थत्वान्न षत्वम्। इदुदुपधस्येति षत्वन्तु न। विसर्गस्यात्र प्रत्ययावयवत्वात्। प्रत्ययभिन्नस्य विसर्गस्येति व्याख्याने तु अत्रापि इदुदुपधस्येति षत्व स्यात्। अत्र विसर्गस्य प्रत्ययैकदेशतया प्रत्ययभिन्नत्वात्। नन्वनेनैव सिद्धे कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठो व्यर्थ इत्यत आह। **कस्कादिष्विति। व्यपेक्षाविरहेऽपीति** ॥ तिष्ठतु सर्पि कुण्डिका पश्येत्यादावित्यर्थ। अत्र चासमासत्वान्नित्य समास इति न भवति। सामर्थ्याभावाच्च इसुसोस्सामर्थ्ये इति च न भवति। प्रत्ययावयवत्वादिदुदुपधस्येत्यपि न भवति। अतस्तत्र षत्वप्राप्त्यर्थ कस्कादिषु पाठ इति भाव। **व्यपेक्षायामिति** ॥ इद सर्पिष्कुण्डिकाया इत्यत्रेत्यर्थ। तत्र इसुसोस्सामर्थ्ये इति विकल्पप्राप्तौ नित्यषत्वार्थं कस्कादौ पाठ इति भाव। **अतः कृकमि** ॥ अत इति पञ्चमी। 'विसर्जनीयस्य' इति 'नित्य समासेऽनुत्तरपदस्थस्य' इति चानुवर्तते। तदाह। **अकारादित्यादिना। अयस्कार इति** ॥ कुप्वोरिति बाधित्वा सत्वम्। एवमग्रेऽपि। **अयस्सहितेति** ॥ अयसो विकार इति तु नोक्तम्। जानपदेत्यादिना ङीष्प्रसङ्गात्। **अयस्कर्णीति** ॥ अय इव कर्णौ यस्या इति विग्रह। नासिकोदरेति ङीष्। **अधश्शिरसी** ॥ अधश्शिरसी इति षष्ठ्यर्थे प्रथमा। विसर्जनीयस्येति, स इति, चानुवर्तते। तदाह। **एतयोरिति** ॥ कुप्वोरित्यस्यापवाद। **अधस्पद-**

एतयोर्विसर्गस्य सादेशः स्यात्पदशब्दे परे । अधस्पदम् । शिरस्पदम् । समास इत्येव । अधः पदम् । शिरः पदम् । अनुत्तरपदस्थस्येत्येव । परमशिरःपदम् । कस्कादिषु च । भास्करः ।

। इति विसर्गसन्धिप्रकरणम् ।

---

## ॥ अथ स्वादिसन्धिप्रकरणम् ॥

'स्वौजसमौट्–' (सू १८३) इति सुप्रत्यये 'शिवस् अर्च्य' इति स्थिते ।

### १६२ । ससजुषो रुः । (८-२-६६)

पदान्तस्य सस्य 'सजुष्' शब्दस्य च रुः स्यात् । जश्त्वापवादः ।

### १६३ । अतो रोरप्लुतादप्लुते । (६-१-११३)

अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । 'भोभगोअघो–' (सू १६७) इति प्राप्तस्य यत्वस्यापवादः । उत्वं प्रति रुत्वस्यासिद्धत्वं तु न भवति । रुत्वमनूद्योत्वविधेः सामर्थ्यात् ।

---

मिति ॥ पदस्याधः इति विग्रहः । मयूरव्यंसकादित्वात् समासः । **शिरस्पदमिति** ॥ शिरसः पदमिति विग्रहः । सौत्रक्रममनुरुध्य पुनराह । **कस्कादिषु चेति । भास्कर इति** ॥ अत इति तपरकरणादतः कुकमीत्यस्य न प्राप्तिरिति सत्वप्राप्त्यर्थं कस्कादौ भास्करशब्दस्य पाठ इति भावः । **स्वौजसमौडिति । ससजुषो रुः** ॥ ससजुषो रु इति च्छेदः । 'रोरि' इति रेफलोपः । सश्च सजूश्च ससजुषौ, तयोरिति विग्रहः । रुविधौ उकार इत् । तत्फलं त्वनुपदमेव वक्ष्यते । स इति सकारो विवक्षितः । अकार उच्चारणार्थः । पदस्येत्याधिकृतं सकारेण सजुष्शब्देन च विशेष्यते । अतस्तदन्तविधिः । सकारान्तं सजुष्शब्दान्तञ्च यत् पदं तस्य रुः स्यादिति । सच अलोऽन्त्यस्येत्यन्त्यस्य भवति । ततश्च फलितमाह । **पदान्तस्य सस्येति । सजुष्शब्दस्य चेति** ॥ सजुष्शब्दान्तं यत् पदं तदन्तस्य षकारस्येत्यर्थः । ततश्च सजुषौ सजुष इत्यत्र षकारस्य न रुत्वम् । पदान्तत्वाभावात् । सजुष्शब्दान्तं यत्पदमिति तदन्तविधिना परमसजूरित्यत्र नाव्याप्तिः । नच सजूरित्यत्राव्याप्तिरिति शङ्क्यम् । व्यपदेशिवद्भावेन तदन्तत्वात् । 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति, 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न' इति च, परिभाषाद्वयं प्रत्ययग्रहणे यस्मादिति विषयं, नतु येनविधिरिति विषयमिति 'असमासे निष्कादिभ्यः' इति सूत्रे भाष्ये स्पष्टम् । ननु शिवस् इति सकारस्य 'झलाञ्जशोऽन्ते' इति जश्त्वेन दकारः स्यात् । जश्त्वं प्रति रुत्वस्य परत्वेऽपि असिद्धत्वात् । इत्यत आह । **जश्त्वापवाद इति** ॥ तथा च रुत्वस्य निरवकाशत्वान्नासिद्धत्वमिति भावः । तदुक्तं भाष्ये । 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य' इति, अपवादो वचनप्रामाण्यात्' इति

## १६४ । प्रथमयोः पूर्वसवर्णः । (६-१-१०२)

अक प्रथमाद्वितीययोरचि परे पूर्वसवर्णदीर्घ एकादेश स्यात् । इति प्राप्ते ।

## १६५ । नादिचि । (६-१-१०४)

अवर्णादिचि परे न पूर्वसवर्णदीर्घ । 'आद्गुण' (सू ६९) । 'एङ पदान्तादति' (सू ८६) शिवोऽर्च्य । 'अत' इति तपर किम् । देवा अत्र । 'अति' इति तपर किम् । श्व आगन्ता । 'अप्लुतात्' किम । एहि सुस्रोत३

---

च । शिवर् अर्च्य इति स्थिते । **अतो रो** ॥ कृत उदित्यत उदित्यनुवर्तते । अत इति पञ्चमी । एङ पदान्तादतीत्यत अतीत्यनुवर्तते । तदाह । **अप्लुतादित्यादिना** ॥ नन्वत्र उत्व बाधित्वा 'भो भगो अघो अपूर्वस्य योऽशि' इति यत्व परत्वात् स्यात् । नच यत्वस्यासिद्धत्वात् उत्व निर्बाधमिति वाच्यम् । कृतेऽपि यत्वे तस्य स्थानिवत्त्वेन रुत्वाद्यत्वस्य दुर्निवारत्वात् । अत आह । **यत्वस्यापवाद इति** ॥ यद्यपि भो भगो अघो इत्यशे उत्वन्नापवाद, तथाप्यपूर्वस्येत्यशे उत्वमपवाद प्राप्त एव । अपूर्वकस्य रोर्यत्वे अतो रोरित्यस्यारम्भादिति भाव । ननु उत्व प्रति रोरसिद्धत्वात् कथमुत्व तस्येत्यत आह । **उत्व प्रतीति** ॥ शिव ऊ अर्च्य इति स्थिते । **प्रथमयो** ॥ 'अकस्सवर्णे' इत्यत अक इति, इकोयणचीत्यत अचीति चानुवर्तते । एक पूर्वपरयोरित्यधिकृतम् । प्रथमयोरित्यवयवषष्ठी । प्रथमाद्वितीये सुब्विभक्ती विवक्षिते । तदाह । **अकः प्रथमेत्यादिना । इति प्राप्त इति** ॥ शिव उ इत्यत्र अकारस्य उकारस्य च स्थाने पूर्वसवर्णे अकारे प्राप्त इत्यर्थ । **नादिचि** ॥ न आदिति छेद । आदिति पञ्चमी । पूर्वसवर्ण इत्यनुवर्तते । तदाह । **अवर्णादिति** ॥ अनेन शिव उ इत्यत्र पूर्वसवर्णदीर्घनिषेध । **आद्गुण इति** ॥ शिव उ इति स्थिते आद्गुण इति गुण बाधित्वा पूर्वसवर्णदीर्घे प्राप्ते तस्मिन्निषिद्धे सति बाधके निवृत्ते गुण पुनरुन्मिषति 'देवदत्तस्य हन्तरि हते देवदत्तस्य न पुनरुन्मज्जनम्' इति न्यायस्तु नात्र प्रवर्तते । देवदत्ते हते सति तद्धन्तुर्हनने देवदत्तस्य न पुनरुन्मेष इति हि तदर्थ । देवदत्त हन्तुमुद्युक्तस्य हनने तु देवदत्तस्य उन्मेषोऽस्त्येव । प्रकृते च पूर्वसवर्णदीर्घेण गुणो न हत । किन्तु हननोद्यमसजातीय प्रसक्तिमात्र पूर्वसवर्णदीर्घप्रसक्त्या स्थितम् । प्रसक्ते च तस्मिन्निषिद्धे गुणोन्मेषो निर्बाध एवेति स्वादिष्विति सूत्रे कैयटे स्पष्टम् । 'अपवादे निषिद्धे उत्सर्गस्य स्थिति' इति न्यायश्च एतन्मूलक एव । 'तौ सत्, भिद्योद्ध्यौ नदे' इत्यादिनिर्देशाश्चात्रानुकूला इत्यलम् । **एङः पदान्तादतीति** ॥ शिवो अर्च्य इति स्थिते ओकारस्य अकारस्य च स्थाने पूर्वरूप ओकार । **देवा अत्रेति** ॥ देवास् अत्रेति स्थिते सस्य रु । तस्य दीर्घादाकारात् परत्वादत परत्वाभावादुत्वन्न । किन्तु भो भगो इति यत्वे लोपश्शाकल्यस्येति लोप । **श्व आगन्तेति** ॥ श्वस् आगन्तेति स्थिते, सस्य रु, तस्य ह्रस्वाकारपरकत्वाभावादुत्वन्न । किन्तु यत्व लोपश्च । **एहीति** ॥ सुस्रोतस् शब्द कस्यचित् सज्ञा । सम्बुद्धेर्हल्ङ्याादिलोप, दूराद्धूते चेति टे प्लुत, सस्य रु । सुस्रोतर् अत्रेति स्थिते

दिग्रहणम्। 'विधि' इति किम्। स्त्री इयती। 'प्रत्यये' किम। प्रत्ययविशिष्टस्य ततोऽप्यधिकस्य वा मा भूत।

## २००। अङ्गस्य। (६-४-१)

इत्यधिकृत्य।

## २०१। टाङसिङसामिनात्स्याः। (७-१-१२)

---

'स्यतासी ललुटो' इति विकरणसज्ञ स्य। इट्। गुणावादेशौ। षत्वम्। अतो दीर्घो यञीति भविष्य इत्यङ्गस्य दीर्घ। भविष्यामीति रूपम्। अत्र आदिग्रहणाभावे मिप्प्रत्यये परत भू इति प्रकृतिमात्रस्य अङ्गसञ्ज्ञा स्यात्। भूशब्दादेव मिप्प्रत्ययविधे। ननु भव इत्यस्य भविष्य इत्यस्य च विकरणविशिष्टस्य ततो मिप्प्रत्ययविधेरभावात्। ततश्च अतो दीर्घो यञाति मिप्प्रत्यये परतो दीर्घो न स्यात्। अत आदिग्रहणमित्यर्थ। **विधिरिति किमिति॥** यस्माद्य प्रत्यय परत्वेन श्रूयते तदादिशब्दरूप तस्मिन् प्रत्यये अङ्गसञ्ज्ञमित्येतावतैव सिद्धे विधिग्रहण किमर्थमिति प्रश्न। **स्त्री इयतीति॥** इद परिमाणमस्या इत्यर्थे इद शब्दात् 'किमिदम्भ्या वो घ' इति वतुप्। वस्य घश्च। तस्य इयादेश। 'इद किमो' इति इदम ईश्। शित्त्वात् सर्वादेश। ई इयत् ई इति स्थिते 'यस्येति च' इतीकारलोप। इयत् इति प्रत्ययमात्रमवशिष्यते। उगितश्चेति ङीपि इयतीति रूपम्। अत्र विधिग्रहणाभावे स्त्री इयतीत्यत्र रेफादिकारस्य 'स्त्रियाः' इत्यङ्गकार्यमियङ् स्यात्। स्त्रीशब्दावयवत्वेन इयदिति प्रत्ययस्य श्रूयमाणत्वात्। नच यस्येति लोपस्याभीयत्वेनासिद्धत्वादजादिप्रत्ययपरकत्वाभावान्नात्र इयङ प्राप्तिरिति वाच्यम्। अन्यूनानतिरिक्तसमानाश्रये कार्ये कर्तव्य एव आभीयासिद्धत्वस्य प्रवृत्ते। अस्ति च यस्येतिचेति शास्त्रापेक्षया स्त्रिया इति सूत्रे अधिकस्य स्त्रीशब्दस्यापेक्षा। कृते तु विधिग्रहणे इयङत्र न भवति। वतुप इदम एवात्र विहितत्वेन तस्मिन् परे, स्त्रीशब्दस्याङ्गत्वाभावात्। नच यस्येति लोपस्य इयङि कर्तव्ये अच परस्मिन्निति स्थानिवद्भावश्शङ्क्य। पदान्तविधौ तन्निषेधात् स्त्रीशब्दस्य सुनिरूपिताङ्गत्वेऽपि नेयङ्। प्रत्यासत्त्या अजादिप्रत्ययनिरूपिताङ्गत्वे तत्प्रवृत्ते। **प्रत्यये किमिति॥** यस्मात् प्रत्ययविधिस्तदाद्यङ्गमित्येतावदेवास्त्वित्यर्थ। **प्रत्ययविशिष्टस्य ततोऽप्यधिकस्य वा मा भूदिति॥** तदादिशब्दरूप कियदित्यपेक्षायामविशेषात् प्रत्ययविशिष्ट वा ततोऽप्याधिक वा निरवधिकमङ्ग स्यात्। नच यस्मात्प्रत्ययेति प्रत्ययस्य श्रुतत्वात् प्रत्ययावच्छेवाङ्गत्व भविष्यतीति वाच्यम्। यस्मात् प्रत्ययविधिस्तदादीत्यर्थसमर्पणेन तस्य प्रत्ययग्रहणस्य चरितार्थत्वात्। ततश्च प्रत्ययविशिष्टस्याङ्गत्वे च वव्रश्चेत्यत्र प्रत्ययविशिष्टस्याङ्गत्वेन उरदित्यादेशस्य परनिमित्तत्वालाभादचःपरस्मिन्निति स्थानिवत्त्वाप्रवृत्त्या न सम्प्रसारण इति सम्प्रसारणनिषेधो न स्यात्। अधिकस्याङ्गत्वे च देवदत्त ओदनमपाक्षीदित्यादौ देवदत्तादिशब्दोत्तर सुपन्निमित्तीकृत्य लुङ्पर्यन्तमङ्गत्वात्तस्य लुङ्परत्वेन देवदत्तादिशब्दात्पूर्वमप्यडापत्ति। अङ्गसञ्ज्ञाया. प्रत्ययनिमित्तत्वाभावेन लुङादिनिरूपिताङ्गस्येत्यर्थस्य दुर्लभत्वात्। प्रत्यये इत्युक्तौ तु न कोऽपि दोष इत्यलम्। **टाङसि-**

अकारान्तादङ्गाट्टादीनां क्रमादिनादय आदेशा स्यु । णत्वम् । रामेण ।

## २०२ । सुपि च । ७-३-१०२)

यञादौ सुपि परे अतोऽङ्गस्य दीर्घ स्यात् । रामाभ्याम् ।

## २०३ । अतो भिस ऐस् । (७-१-९)

अकारान्तादङ्गाद्भिस ऐम् स्यात् । अनेकाल्त्वात्सर्वादेश । रामै ।

## २०४ । ङेर्यः । (७-१-१३)

अतोऽङ्गात्परस्य 'ङे' इत्यस्य यादेश स्यात् । रामाय । इह स्थानिवद्भावेन यादेशस्य सुप्त्वात् 'सुपि च' (सू २०२) इति दीर्घ । 'सन्निपात-

---

**ङसाम्** ॥ अतो भिस इव्यस्मात् अत इति पञ्चम्यन्तमनुवृत्तम् । अङ्गस्येत्यविकृत पञ्चम्या विपरिणतमङ्गस्य विशेषणम् । तदन्तविधि । तदाह । **अकारान्तादङ्गादिति** ॥ परेषामिति शेष । क्रमादिति यथासङ्ख्यसूत्रलब्धम् । **टादीनामिति** ॥ टा–ङसि–ङसामित्यर्थ । **इनादय इति** ॥ इन–आत्–स्य, एते इत्यर्थ । राम–इन इति स्थिते आद्गुण । **णत्वमिति** ॥ अट्कुप्वाङिति नकारस्य णकार इत्यर्थ । राम–भ्या इति स्थिते न विभक्ताविति मस्य नेत्त्वम् । **सुपि च** ॥ अतो दीर्घो यञीत्यनुवर्तते । यञीत्यनेन सुपीति विशेष्यते । यस्मिन् विधिरिति तदादिविधिरित्याह । **यञादाविति** । **अतोऽङ्गस्येति** ॥ अदन्तस्याङ्गस्येत्यर्थ । राम–भिस् इति स्थिते, न विभक्ताविति सस्य नेत्त्वम् । **अतो भिस ऐस** ॥ अत इति पञ्चमी । अङ्गस्येत्याविकृत पञ्चम्या विपरिणम्यते । अत इति तस्य विशेषणम् । विशेषणत्वात्तदन्तविधि । तदाह । **अकारान्तादिति** ॥ रुत्वविसर्गौ सिद्धवत्कृत्याह । **रामैरिति** ॥ यद्यपि एसि विहितेऽपि वृद्धौ रामैरित्यादि सिद्धम् । नच अतो गुण इति पररूप शङ्क्यम् । एकारोच्चारणसामर्थ्यादेव तदसम्भवात् । अन्यथा इसमेव विदध्यात् । तथापि एदैतोर्द्विमात्रत्वाविशेषात् प्रक्रियालाघवाच्च ऐसो विधि । अलोऽन्त्यस्येत्यन्तादेशमाशङ्क्याह । **अनेकाल्त्वादिति** ॥ अथ चतुर्थी विभक्ति । तत्र ङे इति ङकारस्य लशक्वतीत्सञ्ज्ञाया लोप । तदुच्चारणन्तु घेर्ङितीत्याद्यर्थम् । राम–ए–इति स्थिते । **ङेर्य** ॥ ङेरित्येकारान्तात् षष्ठ्येकवचनम् । नतु ङि इति सप्तम्येकवचनम् । व्याख्यानात् । अतो भिस इत्यत अत इति पञ्चम्यन्तमनुवर्तते । तेन च अङ्गस्येत्याधिकृत पञ्चम्या विपरिणत विशेष्यते । तदाह । **अतोऽङ्गादिति** ॥ अदन्तादङ्गादित्यर्थ । सुपि चेति दीर्घम्मत्वा आह । **रामायेति** ॥ ननु यादेशस्य सुप्त्वाभावात्तस्मिन् परत कथ सुपि चेति दीर्घ इत्यत आह । **इहेति** ॥ नन्वत्र दीर्घो यञादित्वेन, सुप्त्वेन च यादेश परनिमित्तीकृत्य प्रवर्तते । सच यञशे अलाश्रय । तस्मिन् कर्तव्ये यादेशस्य कथमिह स्थानिवद्भाव । अनल्विधाविति तन्निषेधादिति चेत् । सत्यम् । इह दीर्घस्य यञादिसुबाश्रयतया आदेशगतयकाररूपालाश्रयत्वेऽपि तस्मिन् कर्तव्ये

लक्षणो विधिरनिमित्तं तद्विघातस्य' (प ८६) इति परिभाषा तु नेह प्रवर्तते । 'कष्टाय क्रमणे' (सू २६७०) इत्यादिनिर्देशेन तस्या अनित्यत्वज्ञापनात् । रामाभ्याम् ।

## २०५ । बहुवचने झल्येत् । (७-३-१०३)

झलादौ बहुवचने सुपि परे अतोऽङ्गस्यैकार स्यात् । रामेभ्य । 'बहुवचने' किम् । राम । रामस्य । 'झलि' किम् । रामाणाम् । 'सुपि' किम् । पचध्वम । जश्त्वम् ।

---

यादेशस्य स्थानिवद्भावेन सुप्त्व भवत्येव । दीर्घस्य आदेशगतयकाररूपालाश्रयत्वेऽपि स्थान्यलाश्रयत्वाभावात् । "अकृत्सार्वधातुकयोर्दीर्घ" इति तु परमप्यत्र नोपन्यस्तम् । अकृत्सार्वधातुकयोरिति पर्युदासबलेन तस्य असुप्येव प्रवृत्तेरित्याहु । स्यादेतत् । सन्निपातलक्षणो विधिरनिमित्तन्तद्विघातस्येत्यस्ति परिभाषा । सन्निपात सश्लेष, लक्षणन्निमित्त, यस्य स सन्निपातलक्षण । विधि कार्यम् । तद्विघातस्य त सन्निपात विहन्तीति तद्विघात कर्मण्यण् । कर्मण्युपपदे कर्तर्यण् । हनस्तोऽचिण्णलोरिति तकार । होहन्तेरिति कुत्वम् । सन्निपातविघातकस्य न निमित्तमित्यर्थ । उपजीवकमुपजीव्यस्य विघातकन्नभवतीति यावत् । प्रकृते च अदन्तसम्बन्धमाश्रित्य प्रवृत्तोऽयादेश अदन्तसम्बन्धविघातकस्य दीर्घस्य कथ निमित्त स्यात् इत्याशङ्क्य परिहरति । **सन्निपातलक्षण इत्यादिना** ॥ तृतीयाद्विवचनवत् दीर्घ सिद्धवत्कृत्याह । **रामाभ्यामिति** ॥ भ्यसि न विभक्ताविति मस्य नेत्त्वम् । सुपि चेति दीर्घे प्राप्ते । **बहुवचने झल्येत्** ॥ अतो दीर्घो यञीत्यत सुपि चेत्यतश्च अत इति सुपीति चानुवर्तते । झलीत्यनेन सुपीति विशेष्यते । यस्मिन् विधिरिति तदादिविधि । तदाह । **झलादाविति । अतो ऽङ्गस्येति** ॥ अदन्तस्याङ्गस्येत्यर्थ । एत्वे सति रुत्वविसर्गो सिद्धवत्कृत्याह । **रामेभ्य इति । राम इति** ॥ अयोगवाहानामकारोपरि शर्षुचोपसङ्ख्यातत्वेन विसर्गस्य झत्वात् स्थानिवद्भावेन सुप्त्वाच्च तस्मिन् परत एत्व प्राप्तम् । रुत्वविसर्गयोरसिद्धत्वेऽपि राम स् इति दशाया झलादिसुप्परत्वात् । अतो बहुवचनग्रहणमित्यर्थ । **रामस्येति** ॥ बहुवचनग्रहणस्यप्रयोजनान्तरम् । षष्ठ्येकवचनस्य ङसस्स्यादेशे तस्य स्थानिवद्भावेन सुप्त्वात् स्वतो झलादित्वाच्च तस्मिन् परत एत्वे प्राप्ते तन्निवृत्त्यर्थ बहुवचनग्रहणमित्यर्थ । सन्निपातपरिभाषा तु सर्वेषामिति निर्देशादेत्वविधौ न प्रवर्तत इत्याहु । **झलि किमिति** ॥ 'उतो वृद्धिर्लुकि हलि' इत्यतो हलीत्यनुवृत्य हलादौ बहुवचने सुपि एत्वमित्येव व्याख्यातु शक्यते । तावतैव रामा इत्याद्यजादिबहुवचने एत्वनिरासादिति प्रश्न । **रामाणामिति** ॥ हलादौ बहुवचने सुपि एत्वमित्युक्तौ रामाणामित्यत्राप्येत्व स्यात् । तन्निवृत्त्यर्थं झल्ग्रहणमित्यर्थ । यद्यप्यत्र सन्निपातपरिभाषया ह्रस्वान्ताङ्गसन्निपातमुपजीव्य प्रवृत्तस्य नुटस्तद्विघातकमेत्व प्रति निमित्तत्वासम्भवादेव एत्वन्न भविष्यति । तथापि झल्ग्रहणमेत्वे सन्निपातपरिभाषाया अप्रवृत्तिज्ञापनार्थम् ।

## २०६ । वाऽवसाने । (८-४-५६)

अवसाने झलां चरो वा स्युः । रामात्—रामाद् । द्वित्वे रूपचतुष्टयम् । रामाभ्याम् । रामेभ्य । रामस्य । सस्य द्वित्वपक्षे 'खरि च' (सू १२१) इति चर्त्वेऽप्यान्तरतम्यात्स एव । न तु तकार । अल्पप्राणतया प्रयत्नभेदात् । अत एव 'स सि–' (सू २३४२) इति तादेश आरभ्यते ।

## २०७ । ओसि च । (७-३-१०४)

ओसि परे अतोऽङ्गस्यैकार स्यात् । रामयो ।

---

तेन 'हलि सर्वेषाम्' इति निर्देशात् सर्वशब्दे एत्वसिद्धावपि विश्वेषामित्यादावप्येत्व भवति । **पञ्चध्वमिति** ॥ ध्वमो झलादिबहुवचनत्वेऽपि सुप्त्वाभावान्न तस्मिन् परत एत्वमित्यर्थ । नच 'बहुवचने झलीक्' इत्येवास्तु । कित्वादन्तावयवे आद्गुणे च रामेभ्य इत्यादिसिद्धेरिति वाच्यम् । एव सति ओसि चेत्युत्तरसूत्रेऽपि इगागमविधौ ज्ञानयोरित्यत्र इकोऽचि विभक्ताविति नुमापत्त । अथ पञ्चमीविभक्ति । तत्र उपदेशेऽजनुनासिक इत् इति डसे इकार इत् । तस्य लोप । ङकारस्तु लशक्विति इत् । तस्य लोप । तदुभयोच्चारणन्तु डसिडयो 'घेर्डिति' इत्याद्यर्थम् । 'टाडसिडसाम्' इति आत् सवर्णदीर्घ । **जश्त्वमिति** ॥ 'झला जशोऽन्त' इति नित्यतया जश्त्व प्राप्तम् । तदपवादश्चर्त्वविकल्प आरभ्यत इत्यर्थ । **वाऽवसाने** ॥ 'झला जश्झशि' इत्यतो झलामिति 'अभ्यासे चर्च' इत्यतश्चरिति चानुवर्तते । तदाह । **अवसान इत्यादिना । द्वित्वे रूपेति** ॥ तकारदकारयोरनचि चेति द्वित्वे तदभावे च रूपचतुष्टयमित्यर्थ । तत्र चर्त्वपक्षे द्वितकारमेकतकारञ्च रूपम् । जश्त्वपक्षे द्विदकारमेकदकारञ्च । रामाभ्याम् , रामेभ्य, इति चतुर्थीवत् प्रक्रिया सुगमेति भाव । अथ षष्ठीविभक्ति । डसो ङकारस्य लशक्वतद्धित इति इत्त्व लोप । ङकारोच्चारणन्तु डिति ह्रस्वश्चेत्यर्थम् । टा डसि ङसामिति स्यादेश सिद्धवत्कृत्याह । **रामस्येति** ॥ नन्विह सकारस्यानचिचेति द्वित्वे पूर्वसकारस्य खरि चेति चर्त्वेन दन्तस्थानतोऽन्तरतमे तकारे सति रामत्स्येति स्यादित्यत आह । **सस्य द्वित्वेति । स एवेति** ॥ सकार एवेत्यर्थ । एवकारव्यावर्त्यमाह । **नतु तकार इति** ॥ ननु दन्तस्थानत श्वासाघोषविवारात्मकबाह्यप्रयत्नतश्चान्तर्यन्तकारेऽप्यविशिष्टमित्यत आह । **अल्पप्राणतयेति** ॥ सकारस्स्थानी महाप्राण तकारस्तु अल्पप्राण । अतो बाह्यप्रयत्नभेदात् तकारो न भवति । इदमुपलक्षणम् । आभ्यन्तरप्रयत्नभेदादपि सकारस्य तकारो न भवतीति द्रष्टव्यम् । 'वस निवासे' इत्यादि धातोर्वत्स्यतीत्यादौ सकारस्य सकारे परे तकारो विधीयते । यदि तु तत्र खरि चेति सकारस्य तकारस्स्यात्तर्हि तद्विधानमनर्थकं स्यादित्यर्थ । 'राम ओस्' इति स्थिते वृद्धौ प्राप्ताया । **ओसि च** ॥ अतो दीर्घो यञीत्यतोऽत इत्यनुवर्तते । अङ्गस्येत्यधिकृतम् । बहुवचने झल्येदित्यत एदित्यनुवर्तते । तदाह । **ओसि पर इति । अतोऽङ्गस्येति** ॥ अदन्ताङ्गस्येत्यर्थ । 'रामे–ओस्' इति स्थिते अयादेश, रुत्वविसर्गौ च, सिद्धवत्कृत्याह । **रामयोरिति** ॥ 'राम–आम्' इति

## २०८ । ह्रस्वनद्यापो नुट् । (७-१-५४)

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः स्यात् ।

## २०९ । नामि । (६-४-३)

नामि परेऽजन्तस्याङ्गस्य दीर्घः स्यात् । रामाणाम् । 'सुपि च' (सू २०२) इति दीर्घो यद्यपि परस्तथापीह न प्रवर्तते । सन्निपातपरिभाषाविरोधात् 'नामि'

---

स्थिते सवर्णदीर्घे प्राप्ते । **ह्रस्वनद्या** ॥ ह्रस्वश्च नदीच आप्चेति समाहारद्वन्द्वाद्दिग्योगे पञ्चमी । 'परस्य' इत्यध्याहार्यम् । 'अङ्गस्य' इत्यविकृत पञ्चम्या विपरिणम्य ह्रस्वादिभिर्विशेष्यते । अतस्तदन्तविधि । 'आमि सर्वनाम्न' इत्यत 'आमि' इत्यनुवर्तते । तच्च 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति न्यायात् 'तस्मादित्युत्तरस्य' इति षष्ठ्यन्त सम्पद्यते । तदाह । **ह्रस्वान्तादित्यादिना** ॥ आमत्र षष्ठीबहुवचनमेव । नतु 'टेरामित्यादिविहितम्' इति भाष्ये स्पष्टम् । नुटि टकार इत् । उकार उच्चारणार्थ । टित्त्वादाद्यवयव । 'राम—नाम्' इति स्थिते । **नामि** ॥ 'ढ्रलोप' इत्यतो दीर्घ इत्यनुवर्तते । दीर्घश्रुत्या च 'अच' इत्युपस्थित तेन चाङ्ग विशेष्यते । अतस्तदन्तविधि । तदाह । **अजन्तस्येति** ॥ 'नुटि' इति न सूत्रितम् । 'भृजःकिन्नुट्च' इत्यौणादिकगन्प्रत्ययान्ते भृङ्गशब्दे ऋकारस्य दीर्घापत्ते । 'अङ्गना पामनामित्यादौ तु न दीर्घ । अर्थवद्ग्रहणपरिभाषया अर्थवत एव नामो ग्रहणात् । पामादिलक्षणे नप्रत्यये टापि द्वितीयैकवचने अमि कृते त्रयाणामपि प्रत्ययाना प्रत्येकमर्थवत्त्वेऽपि समुदायस्यानर्थकत्वात् । ननु 'नामीति सनकारग्रहणम्मास्तु 'आमि' इत्येव सूत्र्यताम् । नच 'राम आम् इत्यस्यान्दशाया दीर्घे सति ह्रस्वान्तत्वाभावात् 'ह्रस्वनद्याप' इति नुट् न स्यादिति वाच्यम् । 'ह्रस्वान्तान्नुट्' इति वचनसामर्थ्यात् कृतेऽपि दीर्घे भूतपूर्वगत्याश्रयणेन नुडुपपत्तेरिति चेन्न । सनकारनिर्देशस्य नोपधाया इत्युत्तरार्थत्वात् । यदि हि आमीत्येवोच्येत तर्हि 'नोपधाया' इत्युत्तरसूत्रेऽपि आमीत्येवानुवर्तेत । ततश्च नान्तस्योपधाया दीर्घस्स्यादामीत्येव लभ्येत । एव सति चर्मणा वर्मणामित्यादावपि दीर्घस्स्यात् । अतो नामीति सनकारनिर्देश इति भाष्ये स्पष्टमित्यलम् । 'अट्कुप्वाङ्' इति णत्व सिद्धवत्कृत्याह । **रामाणामिति** ॥ नन्वत्र परत्वात् 'सुपि च' इति दीर्घ एवोपन्यसनीय न तु 'नामि' इति दीर्घ । फलविशेषाभावेऽपि न्यायानुरोधेनैव शास्त्रप्रवृत्ते 'इको झल्' इतिसूत्रे भाष्ये प्रपञ्चितत्वात् इति शङ्कते । **सुपि चेति दीर्घो यद्यपि पर इति** ॥ परिहरति । **तथापीति । सन्निपातेति** ॥ ह्रस्वान्तसन्निपातमुपजीव्य प्रवृत्तस्य नुट ह्रस्वविघातक 'सुपि च' इति दीर्घ प्रति निमित्तत्वासम्भवादिति भाव । नन्विह 'नामि' इति दीर्घप्रवृत्तावपि सन्निपातपरिभाषाविरोधस्तुल्य इत्यत आह । **नामीत्यनेनत्विति** ॥ यद्यत्र नामीति दीर्घो न स्यात्तर्हि तदारम्भो व्यर्थस्स्यात् । ततश्च निरवकाशत्वाद्रामाणामित्यादौ नामीति दीर्घस्सन्निपातपरिभाषा बाधित्वा प्रवर्तते । सुपि चेति दीर्घस्तु रामाभ्यामित्यादौ सावकाशत्वाद्रामाणामित्यादौ नामि परे सन्निपातपरिभाषान्नबाधितुमर्हति । तस्माद्रामाणामित्यादौ नामि

(सू २०९) इत्यनेन त्वारम्भसामर्थ्यात्परिभाषा बाध्यते। रामे। रामयो। सुप्येत्वे कृते।

## २१०। अपदान्तस्य मूर्धन्यः। (८-३-५५)

आ पादपरिसमाप्तेरधिकारोऽयम्।

## २११। इण्कोः। (८-३-५७)

इत्यधिकृत्य।

## २१२। आदेशप्रत्यययोः। (८-३-५९)

'सहे साड स' (सू ३३५) इति सूत्रात् 'स' इति षष्ठ्यन्त पद-मनुवर्तते। इण्कवर्गाभ्या परस्यापदान्तस्यादेश प्रत्ययावयवश्च य सका-

---

परे दीर्घप्रवृत्तौ सन्निपातपरिभाषा बाधितु नामीति दीर्घारम्भ। ननु, नामीति दीर्घो निरवकाशत्वात्सन्निपातपरिभाषा बाधत इत्ययुक्तम्। यत्र ह्रस्वान्तसन्निपातमनुपजीव्यैव नुट प्रवृत्तिस्तत्र सन्निपातपरिभाषानुपमर्देनैव नामीति दीर्घप्रवृत्तेस्सावकाशत्वात्। यथा कतीना-मित्यत्र। तत्र हि 'षट्चतुर्भ्य' इति नुट् षट्सञ्ज्ञकेभ्यश्चतुरश्च परस्याऽमो नुट् स्यादिति हि तदर्थ। एव हि सति सुपि चेतिवत् कतेर्नामीत्येव सूत्रयेत। अजन्तस्याङ्गस्य नामि दीर्घ इत्येव पर नामीति सामान्यसूत्रन्नारभ्येत। उक्त हि भाष्ये। 'नह्येकमुदाहरण योगारम्भ प्रयोजयति' इति। एकस्य शब्दस्य साधनाय सामान्यसूत्र नारम्भणीयमित्यर्थ। अन्यथा मुद्गादणित्यनुपपत्तेरिति कैयट। नचैव सति कतिशब्दस्याधिकस्य प्रवेशे गौरवमिति वाच्यम्। 'न तिसृचतसृ' इति नामि दीर्घनिषेधाकरणेन लाघवात्। एवञ्च कतेर्नामीत्यनुक्त्वा नामीति सामा-न्यसूत्रारम्भसामर्थ्याद्रामाणामित्यादावपि नामीति दीर्घस्सन्निपातपरिभाषा बाधित्वा निविशत इति युक्तम्। एवञ्च आरम्भसामर्थ्यादिति मूलमपि कतेर्नामीत्यनुक्त्वा नामीति सामान्यसूत्रारम्भ-सामर्थ्यादिति व्याख्येयमित्यल विस्तरेण। अथ सप्तमी विभक्ति। ङेर्ङकार इत्। 'राम–इ–इति स्थिते' आद्गुण इति मत्वाह। **रामे इति**। **रामयोरिति** ॥ षष्ठीद्विवचनवत्। **सुप्येत्वे कृत इति** ॥ पकारस्येत्त्वे, लोपे, 'बहुवचने झल्येत्' इत्येत्वे कृत इत्यर्थ। 'रामे–सु' इति स्थिते। आदेशप्रत्यययोरिति षत्व विधास्यन्नाह। **अपदान्तस्य** ॥ मूर्द्धन्य –मूर्द्धस्थानक, अष्ट-माध्यायस्य तृतीयपादे मध्यत इद सूत्र पठितम्। इत आरभ्यैतत्पादसमाप्तिपर्यन्तमिदमधिक्रियत इत्यर्थ। **इण्को इत्यधिकृत्येति** ॥ उत्तरत्र विधिष्वनुवर्तत इति शेष। इण्च कुश्चेति समाहारद्वन्द्व। पुस्त्वमार्षम। इतरेतरयोगद्वन्द्वेत्वेकवचनमार्षम्। इणिति परणकारेण प्रत्याहार। कु कवर्ग। अथ षत्वविधायक सूत्रमाह। **आदेश। षष्ठ्यन्तामिति** ॥ 'सहेस्साडस्स' इति सूत्रे स् इत्यस्मात् षष्ठ्येकवचने सति स इति निर्दिष्टमिति भाव। तच्चेह द्विवचनान्ततया विपरिणम्य आदेशप्रत्यययोरित्यत्र सम्बध्यते। ततश्च इण्कवर्गाभ्या परयोरपदा-

रस्तस्य मूर्धन्यादेश स्यात। विवृताघोपस्य सम्य तादृश एव ष । रामेषु । ‘इण्को’ किम। रामस्य। ‘आदेशप्रत्यययो’ किम्। सुपी । सुपिसौ। सुपिस । ‘अपदान्तस्य’ किम। हरिस्तत्र । एव कृष्णमुकुन्दादय ।

## २१३ । सर्वादीनि सर्वनामानि । (१-१-२७)

न्तयोरादेशात्मकप्रत्ययावयवात्मकयोस्सकारयोर्मूर्द्धन्यस्स्यादित्यर्थ । फलितमाह। **इण्कवर्गाभ्यामित्यदिना॥** प्रौढमनोरमायान्तु आदेशप्रत्यययोरित्येकापि षष्ठी प्रत्ययविषये अवयवार्थिका। तथाच आदेशस्य प्रत्ययावयवस्य च सकारस्येति लभ्यत इति प्रत्ययशब्दस्य लक्षणा विनोक्तम। सहविवक्षाभावेऽपि सौत्रो द्वन्द्व इति च स्वीकृतम् । यदि तु आदेशविषयेऽपि अवयवषष्ठी स्यात्, आदेशावयवस्य सस्य ष इति लभ्येत, तर्हि तिसृणा चतसृणामित्यादौ दोष । नच त्रिचतुरोस्त्रियामित्यत्रादेशे सकारोच्चारणसामर्थ्यान्न तत्र षत्वमिति वाच्यम् । तिसृ इत्यत्र ‘न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम’ इति षत्वनिषेधेन चरितार्थत्वात्। बिसम्बिसमित्यादौ सकारस्य आदेशावयवतया षत्वापत्तेश्च । नित्यवीप्सयोरित्याष्टमिकद्विर्वचनस्यादेशरूपतया वक्ष्यमाणत्वात् । प्रत्ययो यस्सकारस्तस्येति व्याख्याने तु जिगीषुरित्यादावेव स्यात् । रामेषु इत्यादौ न स्यात् । अत आदेश प्रत्ययावयवश्च यस्सकारस्तस्येति व्याख्यातम । प्रत्ययावयवलक्षणायाञ्च हलि सर्वेषामिति निर्देशो लिङ्गम् । **विवृताघोषस्येति ॥** मूर्धन्यत्व ऋटुरषेष्वविशिष्टम्। विवृतत्वरूपाभ्यन्तरप्रयत्नवत अघोषरूपबाह्यप्रयत्नवतश्च सकारस्य तदुभयात्मकष्षकार एव भवतीत्यर्थ । अकारानिवारणायाद्य विशेषणम् । ऋकारवारणाय द्वितीयम्। **रामेष्विति ॥** नच सु इत्यस्य व्यपदेशिवद्भावेन सुबन्तत्वेन पदत्वात् सातपदाद्योरिति षत्वनिषेधस्स्यादिति चेन्न। प्रत्ययग्रहणे यस्मात्सविहितस्तदादेरेव ग्रहणादित्यलम्। **सुपिसाविति ॥** पिस गतौ क्विप् धातुसकारोऽय नत्वादेश नापिप्रत्ययावयव इति भाव । अथ सर्वादिशब्देषु सर्वनामकार्य विधास्यन् सर्वनामसञ्ज्ञामाह। **सर्वादीनि ॥** सर्व आदि प्रथमावयव येषान्तानि सर्वादीनि। सर्वशब्द स्वरूपपर । नपुसकवशात् शब्दरूपाणीति विशेष्यमध्याहार्यम्। तदाह। **सर्वादीनि शब्देत्यादिना ॥** ननु बहुव्रीहेरन्यपदार्थप्रधानत्वात् सर्वशब्दस्य च समासवृत्तिपदार्थत्वादन्यपदार्थत्वाभावाद्विश्वादिशब्दानामेव सर्वादिशब्देन बहुव्रीहिणावगमात् सर्वनामसञ्ज्ञा स्यात्, न तु सर्वशब्दस्यापीति चेत्। उच्यते। सर्व आदिर्यस्य समुदायस्येति विग्रह । सर्वशब्दघटितस्समुदायस्समासार्थ । समुदाये च प्रवर्तमाना सर्वनामसञ्ज्ञा क्वचिदपि अप्रयुज्यमाने तस्मिन् वैयर्थ्यादानर्थक्यात्तदङ्गेष्विति न्यायेनावयवेष्ववतरन्तीत्यविशेषात् सर्वशब्देऽपि भवति । एवञ्चात्र सर्वशब्दस्य स्वरूपेण वर्तिपदार्थता समुदायरूपेणत्वन्यपदार्थप्रवेश । नच समुदायस्यान्यपदार्थत्वे सर्वादीनीति बहुवचनानुपपत्तिश्शङ्क्या। सर्वशब्दघटितस्य विवक्षितावयवसङ्घस्य समूहस्यान्यपदार्थत्वात्। उद्भूतावयवभेद समुदायस्समासार्थ इति कैयटोक्तेरप्ययमेवार्थ । अतो न बहुवचनस्यानुपपत्ति । तदेव व्याख्याने हलिसर्वेषामित्यादिनिर्देश प्रमाणम्। सर्वशब्दस्य सर्वनामत्वाभावे तु सर्वेषामित्यादौ सर्वनामकार्याणि सुडादीनि न स्यु । तथाच सर्वादीनीति तद्गुणसंविज्ञानो

सर्वादीनि शब्दस्वरूपाणि सर्वनामसञ्ज्ञानि स्यु । 'तदन्तस्यापीय संज्ञा'। 'द्वन्द्वे च' (सू २२४) इति ज्ञापकात् । तेन 'परमसर्वत्र इति त्रल्' 'परमभवकान्' इत्यत्राकच्च सिद्धयति ।

## २१४ । जसः शी । (७-१-१७)

अदन्तात्सर्वनाम्न परस्य जस शी स्यात् । अनेकाल्त्वात्सर्वादेश ।

बहुव्रीहि । तस्यान्यपदार्थस्य गुणा विशेषणानि वर्तिपदार्थरूपाणि तेषा सविज्ञान क्रियान्वयितया विज्ञान यत्र स तद्गुणसविज्ञान इति व्युत्पत्ति । यत्र सयोगसमवायान्यतरसम्बन्धेनान्यपदार्थे वर्तिपदार्थान्वय तत्र प्रायेण तद्गुणसविज्ञानो बहुव्रीहि । यथा द्विवासा देवदत्तो भुङ्क्ते, लम्बकर्ण भोजयेत्यादौ । तत्रहि वाससो कर्णयोश्च भुजिक्रियाभावेऽपि सन्निहितत्वमात्रेण तद्गुणसविज्ञानत्वम् । प्रकृते च समुदाये अन्यपदार्थे सर्वशब्दस्य समवायान्तर्गतारोपितावयवावयविभावसम्बन्धसत्त्वात्तद्गुणसविज्ञानत्वम् । स्वस्वामिभावादिसम्बन्धेनान्यपदार्थे वर्तिपदार्थान्वये त्वतद्गुणसविज्ञानो बहुव्रीहि । यथा चित्रगुमानयेत्यादावित्यलम् । ननु सर्व विश्व इत्येव सर्वादिशब्दाना केवलानामेव सर्वादिगणे पाठात् परमसर्वादिशब्दाना कथ सर्वनामतेत्यत आह । **तदन्तस्यापीति । द्वन्द्वे चेतीति** ॥ द्वन्द्वेचेत्यनेन सर्वादिशब्दान्तद्वन्द्वस्य सर्वनामसञ्ज्ञा प्रतिषिध्यते वर्णाश्रमेतराणामित्यादौ । यदि केवलानामेव सर्वादिगणपठिताना सर्वनामता, नतु तदन्तानामपि, तर्हि तत्प्रतिषेधो व्यर्थस्स्यात् । अतस्तदन्तस्यापीय सञ्ज्ञेति विज्ञायत इत्यर्थ । ननु परमसर्वादिशब्देषु गणपठिताना केवलानामेव सर्वादिशब्दानामस्तु सर्वनामता, मास्तु तदन्तानामपि । 'सर्वनाम्नस्स्मै' इत्यादिसर्वनामकार्याणामङ्गाधिकारस्थत्वेन, पदाङ्गाधिकारे तस्य तदन्तस्य चेति परिभाषया परमसर्वस्मै इत्यादिषु सिद्धेरित्यत आह । **तेनेति** ॥ तदन्तस्यापि सञ्ज्ञाबलेनेत्यर्थ । **सिद्धयतीति** ॥ सप्तम्यास्त्रलिति सप्तम्यन्तात् सर्वनाम्नो विधीयमानस्त्रल् 'अव्ययसर्वनाम्नामकच् प्राक्टे' इत्यज्ञाताद्यर्थेषु विधीयमानोऽकच्च सिद्ध्यतीत्यर्थ । चकारात् पञ्चम्यास्तसिलिति तसिल् च । नचावयवगतसर्वनामत्वेन तत्सिद्धिरिति वाच्यम् । कुत्सित इति सूत्रस्थभाष्यरीत्या सङ्ख्याकारकाभ्या पूर्वार्थस्य इतरान्वयेन सुबन्तादेव तद्धितोत्पत्त्यवगमेन सर्वनामप्रकृतिकसुबन्तार्थगतकुत्सादिविवक्षाया सर्वनामावयवटे प्रागकजित्यर्थपर्यवसानात्तदन्तसञ्ज्ञाभावे तदसिद्धेरिति भाव । सर्वशब्दात् जसि पूर्वसवर्णदीर्घे प्राप्ते । **जसश्शी** ॥ अतो भिस इत्यस्मादत इत्यनुवर्तते । सर्वनाम्नस्स्मै इत्यतस्सर्वनाम्न इत्यनुवर्तते । तदाह । **अदन्तादित्यादिना** ॥ शी इति दीर्घोच्चारण नपुसकाच्चेत्युत्तरार्थम् । तेन वारिणी इति सिद्ध्यति । **अनेकाल्त्वादिति** ॥ नतु शित्त्वप्रयुक्त सर्वादेशत्वमत्रेति भाव । ननु 'नानुबन्धकृतमनेकाल्त्वम्' इत्यस्ति परिभाषा । अनुबन्ध इत् तत्प्रयुक्तमनेकाल्त्व सर्वादेशनिमित्तन्न भवतीत्यर्थ । ततश्च शी इत्यत्र शकारस्य लशक्वतद्धित इति इत्सञ्ज्ञकत्वात् कथन्तत्प्रयुक्तमनेकाल्त्वम् । अतएव 'अर्वणस्त्रसावनञ' इत्यत्र ऋकारमितमादाय तृ इत्यादेशस्य नानेकाल्त्वम् । अन्यथा तस्यापि सर्वादेशत्वापत्ते । अतश्शित्त्वप्रयुक्तमेवात्र सर्वादेशत्वमाश्रयितु युक्तमित्याशङ्क्य

न च 'अर्वणस्तृ–' (सू ३६४) इत्यादाविव 'नानुबन्धकृतमनेकाल्त्वम्' (प ६) इति वाच्यम् । सर्वादेशत्वात्प्रागित्संज्ञाया एवाभावात् । सर्वे ।

## २१५ । सर्वनाम्नः स्मै । (७-१-१४)

अतस्सर्वनाम्नो 'ङे' इत्यस्य 'स्मै' स्यात् । सर्वस्मै ।

## २१६ । ङसिङ्योः स्मात्स्मिनौ । (७-१-१५)

अतस्सर्वनाम्न एतयोरेतौ स्त । सर्वस्मात् ।

## २१७ । आमि सर्वनाम्नः सुट् । (७-१-५२)

अवर्णान्तात्परस्य सर्वनाम्नो विहितस्याम सुडागम स्यात् । एत्वषत्वे ।

---

निराकरोति । **नचेत्यादिना** ॥ अर्वणस्तृ इत्यादाविव अनुबन्धकृतमनेकाल्त्वमिति नेत्यन्वय । शी इति शकारस्य 'लशक्वतद्धिते' इति इत्सज्ञा वक्तव्या । तेन च सूत्रेण प्रत्ययादिभूताना लशकवर्गाणामित्सज्ञा विहिता । प्रकृते च शी इत्यस्य प्रत्ययाविकारस्थत्वाभावान्न स्वत प्रत्ययत्व, किन्तु जसादेशत्वेन स्थानिवद्भावात् प्रत्ययत्व वक्तव्यम् । स्थानिवद्भावश्च आदेशभावमापन्नस्य शी इत्यस्य भवति । एवञ्चादेशत्वसिद्धे प्रागादेशभावदशाया शी इति शकारस्य इत्सज्ञाया असिद्धेरनेकाल्त्वमप्रतिहतम् । अत एव शित्त्वात् सर्वादेश इत्यपि निरस्तम् । तृ इत्यत्र तु आदेशभावात् प्रागेव ऋकारस्य इत्सज्ञकत्वान्न तत्प्रयुक्तमनेकाल्त्वमिति वैषम्यमित्यभिप्रेत्य परिहरति । **सर्वादेशत्वात्प्रागिति** ॥ शीभावे सति 'सर्व ई' इति स्थिते आद्गुण सिद्धवत्कृत्याह । **सर्वे इति** ॥ सर्वशब्दात् चतुर्थ्येकवचने 'ङेर्य' इति प्राप्ते । **सर्वनाम्नः स्मै** ॥ अतो भिस इत्यस्मादत इत्यनुवर्तते । ङेर्य इत्यतो ङेरिति च । तदाह––**अतस्सर्वेत्यादिना** ॥ सर्वशब्दात् पञ्चम्येकवचने टाङसिङसामिति प्राप्ते । **ङसिङ्योः** ॥ ङसिश्च ङिश्चेति द्वन्द्व । अतो भिस इत्यस्मादत इति, सर्वनाम्न स्मै इत्यतस्सर्वनाम्न इति चानुवर्तते । तदाह । **अतस्सर्वेति । एतयोरिति** ॥ ङसिङ्योरित्यर्थ । **एताविति** ॥ स्मात्स्मिनावित्यर्थ । स्मादादेशस्य स्थानिवद्भावेन विभक्तित्वान्नविभक्ताविति तकारस्य नेत्त्वमिति मत्वाह । **सर्वस्मादिति** ॥ 'सर्व आम्' इति स्थिते 'ह्रस्वनद्याप' इति नुटि प्राप्ते । **आमि सर्वनाम्नः** ॥ 'आज्जसेरसुक्' इत्यतोऽनुवृत्तेन आदिति पञ्चम्यन्तेन अङ्गस्येत्यधिकृत पञ्चम्या विपरिणत विशेष्यते, तदन्तविधि , परस्येत्यध्याहार्यम् । 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति न्यायेन 'तस्मादित्युत्तरस्य' इति परिभाषया आमीति सप्तमी आम इति षष्ठ्यन्ततामापद्यते । सर्वनाम्न इति तु विहितविशेषणम् । ततश्च अवर्णान्तादङ्गात् परस्य सर्वनाम्नो विहितस्यामस्सुडागमस्स्यादित्यर्थस्सम्पद्यते । तदाह । **अवर्णान्तादित्यादिना** ॥ अवर्णान्तादित्यनन्तर अङ्गादिति शेष । अवर्णान्तात्सर्वनाम्नो विहितस्याम इति व्याख्याने तु येषान्तेषामित्यादौ सुडागमो न स्यात् । तत्र आमो दकारान्ताद्विहितत्वात् । सर्वनाम्न. परस्येति तु न व्याख्यातम् । तथा सति वर्णाश्रमेतराणामित्यासिद्धेरित्यग्रे मूल एव स्पष्टीभविष्यति । **एत्वषत्वे इति** ॥ बहुवचने झल्येदित्येत्वम् । सन्नि-

सर्वेषाम् । सर्वस्मिन् । शेषं रामवत् । एवं विश्वादयोऽप्यदन्ता । सर्वादयश्च पञ्चत्रिंशत् । सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम । 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्' (ग सू १) 'स्वमज्ञातिधनाख्यायाम्' (ग सू २) । 'अन्तर बहिर्योगोपसव्यानयो' (ग सू ३) । त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् इति । तत्र उभशब्दो द्वित्वविशिष्टस्य वाचक । अत एव नित्य द्विवचनान्त । तस्येह पाठस्तु 'उभकौ' इत्यकजर्थ । न च कप्रत्ययेनेष्टसिद्धि ।

---

पातपरिभाषात्वत्र न प्रवर्तते इति बहुवचने झल्येदित्यत्रोक्तम् । 'आदेशप्रत्यययो' इति षत्व सुटोऽपि । 'तदागमास्तद्ग्रहणेन गृह्यन्ते' इति प्रत्ययावयवत्वादिति भाव । **सर्वेषामिति** ॥ नन्वामीति सप्तमीनिर्देशसामर्थ्यात्तस्मादित्युत्तरस्येति न प्रवर्तते । ततश्च आमि परे प्रकृतेरेव सुडागमो युक्त इति चेन्न । सप्तमीनिर्देशस्य 'त्रेस्त्रय' इत्युत्तरार्थमावश्यकत्वादिति भाव । सप्तम्येकवचनस्य ङसिङ्योरिति स्मिन्नादेश सिद्धवत्कृत्याह । **सर्वस्मिन्निति** । **शेषमिति** ॥ शिष्यत इति शेष कर्मणि घञ् । 'घञजबन्ता पुसि' इति तु प्रायिकमिति भाव । **एवमिति** ॥ सर्व शब्दवदित्यर्थ । नच सर्वशब्दस्य बहुत्वव्यापकसर्वत्वात्मकधर्मविशेषप्रवृत्तिनिमित्तकत्वात् बहुवचनमेव न्याय्यमिति वाच्यम् । सर्वशब्दो हि बह्ववयवारब्धसमुदाये वर्तते । तत्र यदा अनुद्भूतावयवस्समुदायो विवक्षित तदा भवत्येकवचनम् । यथा—सर्वो लोक इति । अनुद्भूतत्वम् अविवक्षितसङ्ख्याकत्वम् । यदा तु अनुद्भूतावयवसमुदायौ तदा द्विवचनम् । यथा—सर्वौ व्यूहाविति । यदा तु उद्भूतावयवसमुदाय तदा बहुवचनम् । यथा—सर्वे जना इति । अथ के ते सर्वादयश्शब्दा ? कति च ते ? इत्यत्राह । **सर्वादयश्च पञ्चत्रिंशदिति** ॥ पञ्च च त्रिंशच्चेति द्वन्द्व । पञ्चाधिका त्रिंशदिति शाकपार्थिवादित्वात् तत्पुरुषो वा । सङ्ख्यायास्तत्पुरुषस्योपसङ्ख्यानमिति डच्तु समासान्तो न भवति । अन्यत्राविकलोपादित्युक्ते । **पूर्वपरावरेति** ॥ गणान्तर्गत सूत्रम् । व्यवस्थायामसज्ञायाञ्च पूर्वादीनि सप्त सर्वादिगणप्रविष्टानि वेदितव्यानीत्यर्थ । सर्वनामसज्ञा तु 'सर्वादीनि सर्वनामानि' इत्येव सिध्यति । स्वमज्ञातीति, अन्तर बहिरिति च गणसूत्रद्वयमेव योज्यम् । व्यवस्थादिशब्दा अग्रे मूल एव व्याख्यास्यन्ते । इतिशब्दस्सर्वादिगणसमाप्तिद्योतनार्थ । तत्र विश्वशब्दोऽपि सर्वशब्दवदेव । उभशब्दे तु विशेषमाह । **तत्रेति** ॥ सर्वादिषु मध्य इत्यर्थ । **अत एवेति** ॥ द्वित्वविशिष्टवाचकत्वादेवेत्यर्थ । **नित्यमिति** ॥ सर्वदा द्विवचनान्त इत्यर्थ । द्विवचनान्त एव नत्वेकवचनबहुवचने इति यावत् । तेन टाबादि न निवार्यते । नन्वेव सति 'जसश्शी' 'सर्वनाम्नस्स्मै' 'ङसिङ्योस्स्मात्स्मिनौ' । 'आमि सर्वनाम्नस्सुट्' इत्युक्ताना सर्वनामकार्याणा द्विवचने अभावादुभशब्दस्य सर्वादिगणे पाठो व्यर्थ इत्यत आह । **तस्येहेति** ॥ तस्य उभशब्दस्य इह सर्वादिगणे पाठस्तु उभकावित्यत्र 'अव्ययसर्वनाम्नामकच्प्राक्टे' इत्यकच्प्रत्ययार्थ इत्यर्थ । ननु मास्तु उभशब्दस्य सर्वादिगणे पाठ । मास्तु च सर्वनामता । मास्तु च तत्प्रयुक्त अकच् । उभशब्दात् स्वार्थिके कप्रत्यये सत्यपि उभकाविति

द्विवचनपरत्वाभावेन 'उभयत' 'उभयत्र' इत्यादाविवायच्प्रसङ्गात् । तदुक्तम् 'उभयोऽन्यत्र' (वा २३२) अन्यत्रेति द्विवचनपरत्वाभावे। उभयशब्दस्य द्विवचन नास्ति इति कैयट । 'अस्ति' इति हरदत्त । तस्माज्जस्ययजा-

---

रूपसिद्धे । नच काकचो स्वरभेदश्शङ्क्य । 'तद्धितस्य' इति प्रत्ययस्वरेण वा, 'चितस्सप्रकृते' इति चित्स्वरेण वा, अन्तोदात्तत्वे विशेषाभावात्। उक्तञ्च भाष्ये, काकचो को विशेष ? इति। तत्राह। **नचेति**॥ कप्रत्ययेन उभकावितीष्टरूपसिद्धिर्नचेत्यन्वय । कुत इत्यत आह। **द्विवचनेति**॥ द्विवचनपरत्वाभावे उभशब्दादयच् विहित । अकचि तु सति 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति न्यायेन उभशब्देन उभकशब्दोऽपि गृह्यते। तस्य च उभक औ इत्यस्या दशाया द्विवचनपरत्वादयच्प्रत्ययो न भवति । कप्रत्यये तु सति तस्य उभशब्दात् परतो विहितत्वेन तन्मध्यपतितन्यायाप्रवृत्त्या उभकशब्दस्य उभशब्देन ग्रहणाभावात् उभशब्दस्य कप्रत्ययव्यवधानेन द्विवचनपरकत्वाभावात् अयचि उभयको इति स्यात्। यथा उभयत उभयत्रेत्यत्र द्विवचनपरकत्वाभावादयच्प्रत्ययोऽस्ति तद्वदित्यर्थ । द्विवचने सति अयच्प्रत्ययो नेत्यत्र किं प्रमाणमित्यत आह। **तदुक्तमिति**॥ वार्तिककृतेति शेष । द्विवचने सति अयच्प्रत्ययो नेति यदभिहित तत् 'उभयोऽन्यत्र' इति वदता वार्तिककृता उक्तमित्यर्थ । अन्यत्रेत्येतद्व्याचष्टे। **अन्यत्रेति द्विवचनपरत्वाभावे इति**॥ उदाहृतवार्तिके अन्यत्रेत्यनेन द्विवचनादन्यस्मिन् परे इत्यर्थो विवक्षित । 'अन्याभावो द्विवचनटाब्विषयत्वात्' इति पूर्ववार्तिके द्विवचनस्यैव प्रस्तुतत्वादिति भाव । टाब्ग्रहणन्तु तत्राविवक्षितमिति कैयटादिषु स्पष्टम्। ततश्च सर्वनामतानिमित्तकाकजर्थं उभशब्दस्य सर्वादिषु पाठ इति स्थितम्। अत्र यद्वक्तव्यन्तत्तद्धितप्रक्रियाया 'उभादुदात्तो नित्यम्' इत्यत्र वक्ष्यते। अथोभयशब्दे विशेषमाह। **उभयशब्दस्येति**॥ उभौ अवयवौ यस्यावयविनस्स उभय मणि । 'उभादुदात्त' इत्ययच्। अवयववृत्तेस्सङ्ख्यावाचिन उभशब्दादवयविन्यर्थे अयच्प्रत्ययस्स्यादिति तदर्थ । द्व्यवयवारब्धो मणिरित्यर्थ । मणेरवयविन एकत्वादुभय इत्येकवचनम्। उभयश्च उभयश्च उभयश्चेत्येव द्व्यवयवारब्धत्रयादिमणिविवक्षायान्तु बहुवचन उभये मणय इति । उभयश्च उभयश्चेति द्व्यवयवारब्धद्विमणिविवक्षायामुभयौ मणी इति द्विवचनन्तु न भवति । उभयोऽन्यत्रेत्युदाहृतवार्तिके उभयशब्दस्य द्विवचनादन्यत्रैव प्रयोगविध्यवगमात्। नच तत्र वार्तिके स्वार्थिकायजन्तस्यैवोभयशब्दस्य ग्रहणम्। स्वार्थिकायजन्तोभयशब्दोपक्रमेणैव तद्वार्तिकप्रवृत्तेरिति वाच्यम्। एतद्वार्तिकव्याख्यावसरे उभयो मणि, उभये देवमनुष्या, इति भाष्ये उदाहृतत्वेन तयप्समानार्थकायजन्तस्यापि तत्र ग्रहणावगमात्। एतदेवाभिप्रेत्य 'तद्धितश्चासर्वविभक्ति' इत्यव्ययत्वमुभयशब्दस्य द्विवचनाभावेनासर्वविभक्तित्वेऽपि न भवति । तसिलादय प्राक्पाशप, शस्प्रभृतय प्राक् समासान्तेभ्य, अम्, आम्, कृत्वोऽर्थो, तसिवती, नानाञौ, इति परिगणितत्वादिति कैयटेनोक्तम्। तदाह। **कैयट इति**॥ एवञ्च उभय, उभये। उभय, उभयान्। उभयेन, उभयै। उभयस्मै, उभयेभ्य। उभयस्मात्, उभयेभ्य। उभयस्य, उभयेषाम्। उभयस्मिन्, उभयेषु। इत्येव

**देशस्य स्थानिवद्भावेन तयप्प्रत्ययान्ततया 'प्रथमचरम–' (सू २२६) इति विकल्पे प्राप्ते विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वान्नित्यैव संज्ञा भवति। उभये। डतरडतमौ प्रत्ययौ। प्रत्ययग्रहणे तदन्ता ग्राह्या' (प २४) यद्यपि 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' (प २८) 'सुप्तिङन्तम्' (सू २९) इति ज्ञाप-**

---

रूपाणि। नतूभयावित्यादिद्विवचनान्तप्रयोग इति सिद्धं भवति। हरदत्त इत्यस्वरसोद्भावनम्। तद्बीजन्तु उभयोऽन्यत्रेति प्रागुक्तवार्तिकभाष्यविरोध एवेत्यन्यत्र विस्तरः। उभयशब्दात् जसि सर्वादीनीति नित्या सर्वनामसंज्ञा बाधित्वा परत्वात् 'प्रथमचरमतयाल्पार्धकतिपयनेमाश्च' इति सर्वनामसंज्ञाविकल्पप्राप्तिमाशङ्क्य परिहरति। **तस्मादित्यादिना** ॥ तस्मात् उभयशब्दात् जसि सति प्रथमचरमेति विकल्पे प्राप्ते नित्यैव संज्ञा भवतीत्यर्थः। सर्वादीनीत्यनेनेति शेषः। ननु प्रथमचरमादिष्वनन्तर्भावात् कथमुभयशब्दस्य प्रथमचरमेति विकल्पप्राप्तिरित्यत आह। **तयप्प्रत्ययान्ततयेति** ॥ ननु तयप अश्रवणात् कथमुभयशब्दस्य तयप्प्रत्ययान्तत्वमित्यत आह। अयजादेशस्य स्थानिवद्भावेनेति। उभादुदात्त इति सूत्रे 'संख्याया अवयवे तयप्' इति उभशब्दाद्विहितस्य तयपोऽयजादेशः, तयब्ग्रहणमननुवर्त्य अयच् स्वतन्त्रः प्रत्ययो वा, इति पक्षद्वयं भाष्ये स्थितम्। तत्र प्रथमपक्षाभिप्रायेणात्र सर्वनामसंज्ञाविकल्पशङ्का बोध्या। ननु प्रथमचरमेति विकल्पस्य परत्वात् कथमिह सर्वादीनीति नित्यैव संज्ञेत्यत आह। **अन्तरङ्गत्वादिति** ॥ तदेवोपपादयति विभक्तिनिरपेक्षत्वेनेति। प्रथमचरमेति जसि विकल्पविधिः जसपेक्षत्वेन विभक्त्यपेक्षत्वात् बहिरङ्गः। सर्वादीनीति नित्यसंज्ञाविधिस्तु तदनपेक्षत्वात् अन्तरङ्गः। अल्पापेक्षमन्तरङ्गमिति न्यायात्। अतोऽत्र परमपि प्रथमचरमेति विकल्पं बाधित्वा सर्वादीनीति नित्यैव संज्ञा भवति। परादन्तरङ्गस्य बलीयस्त्वादिति भावः। तथा च शीभावो नित्य इत्याह। **उभये इति** ॥ ननु डतरडतमशब्दयोः क्वापि प्रयोगादर्शनात् किमर्थस्तयोः पाठ इत्यत आह। **डतरडतमौ प्रत्ययाविति** ॥ 'किंयत्तदोर्निर्द्धारणे द्वयोरेकस्य डतरच्'। 'वा बहूनां जातिपरिप्रश्ने डतमच्'। 'एकाच्च प्राचाम्' इति तद्धिताधिकारविहितौ डतरडतमौ प्रत्ययौ। 'प्रत्ययः' इत्यधिकृत्य तद्विधेः। अतः प्रत्ययग्रहणपरिभाषया डतरग्रहणेन कतरादिशब्दानां, डतमग्रहणेन कतमादिशब्दानाञ्च ग्रहणमिति भावः। शङ्कते। **यद्यपीति। सुप्तिङन्तमिति** ॥ यदि संज्ञाविधावपि प्रत्ययग्रहणपरिभाषा प्रवर्तेत, तर्हि सुप्तिङ्पदमित्येव सूत्रयेत। प्रत्ययग्रहणपरिभाषयैव सुप्तिङन्तमित्यर्थलाभात्। अतस्संज्ञाविधौ प्रत्ययग्रहणपरिभाषा न प्रवर्तत इति विज्ञायते। एवञ्च प्रकृते सर्वनामसंज्ञाविधौ डतरडतमग्रहणे प्रत्ययग्रहणपरिभाषानुपस्थानात् कथं तदन्तग्रहणमित्याक्षेपः। परिहरति। **तथापीति** ॥ अन्यत्र संज्ञाविधौ प्रत्ययग्रहणेन तदन्तग्रहणाभावेऽपि इह सर्वनामसंज्ञाविधौ डतरडतमग्रहणे तदन्तग्रहणमस्त्येवेत्यर्थः। कुत इत्यत आह। **केवलयोरिति** ॥ 'न केवला प्रकृतिः प्रयोक्तव्या, नापि प्रत्ययः' इति न्यायेन केवलप्रत्यययोर्डतरडतमयोः प्रयोगानर्हत्वेन तयोस्सर्वनामसंज्ञायाः फलाभावादित्यर्थः। तस्मात् डतरडतमग्रहणेनात्र

कान्। तथापीह तदन्तग्रहणम्। केवलयो संज्ञाया. प्रयोजनाभावात्। अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद्विबहुविषये निर्धारणे वर्तेते। तत्रान्यतमशब्दस्य गणे पाठाभावान्न सज्ञा। 'त्व' 'त्व' इति द्वावप्यदन्तावन्यपर्यायौ। 'एक उदात्तोऽपरोऽनुदात्त' इत्येके। 'एकस्तान्त' इत्यपरे। 'नेम' इत्यर्धे। सम सर्वपर्याय। तुल्यपर्यायस्तु नेह गृह्यते, 'यथासङ्ख्यमनुदेश समानाम्'। (सू १२८) इति ज्ञापकात्। 'अन्तर बहिर्योगोप—'(ग सू ३) इति गणसूत्रे 'अपुरि' इति वक्तव्यम्' (वा २४०)। अन्तरायां पुरि।

---

कतरकतमादिशब्दाना ग्रहणमिति स्थितम्। ननु डतरग्रहणेनैव सिद्धे सर्वादिगणे अन्यतरशब्दपाठो व्यर्थ। अन्यतमशब्दस्यापि डतमप्रत्ययान्तत्वात् सर्वनामत्वापत्तिश्चेत्यत आह। **अन्यतरान्यतमशब्दावव्युत्पन्नाविति** ॥ डित्थादिशब्दवत् प्रकृतिप्रत्ययविभागविहीनावित्यर्थ। कियत्तदेकेभ्य एव डतर डतम विधानादिति भाव। नन्वेव सत्यन्यतरान्यतमशब्दाभ्या द्विबहुनिर्द्धारणावगम कथमित्यत आह। **स्वभावादिति** ॥ एवञ्चान्यतमशब्दस्य न सर्वनामत्वमित्याह। **तत्रेति** ॥ एतयोर्मध्ये इत्यर्थ। अन्यतरशब्दस्य तु डतरप्रत्ययान्तत्वाभावेऽपि सर्वादिगणे पाठादेव सर्वनामत्वमित्युक्तप्रायम्। अथ त्वन्वेत्येकप्रातिपदिकभ्रम वारयन् अप्रसिद्धार्थत्वाद्व्याचष्टे। **त्व त्व इति द्वावप्यदन्तावन्यपर्यायाविति** ॥ अन्यशब्दसमानार्थकावित्यर्थ। द्वयोरप्यदन्तत्वे अन्यतरपाठवैयर्थ्य परिहरति। **एक इति** ॥ **इत्येके इति** ॥ इति कतिपये वृत्तिकृदादय मन्यन्त इत्यर्थ। 'एत त्व मन्ये' इत्युदात्तत्वस्य 'उतत्व पश्यन्' इत्यादावनुदात्तत्वस्यच ऋग्वेदे दर्शनादिति भाव। **एकस्तान्त इति** ॥ सहितापाठे त्वत् त्व इति छेदमाश्रित्य प्रथमस्तकारान्त द्वितीय अदन्त इत्यपरे मन्यन्त इत्यर्थ। अन्यथा एकश्रुत्या वा स्वरविनिर्मुक्त वा सकृदेव पठेत्, तावतैव द्वयोरपि लाभात्। 'त्वत्त्वसमसिमेत्यनुच्चानि' इति फिट्सूत्राच्च। स्तरीरुत्वद्भवति सूत उत्वत् इत्यत्र गणव्याख्यावसरे वेदभाष्ये 'त्वदिति सर्वादिपठित अनुदात्तोऽय अन्यपर्याय' इत्युक्तत्वाच्च। 'त्वदधरमधुरमधूनि पिबन्तम्' इति जयदेवप्रयोगाच्च। तत्र हि त्वच्छब्दोऽन्यपर्याय। त्वत अधर इति विग्रह। अन्यस्या अधर इत्यर्थ। नतु तवाधर इति विवक्षित, 'पश्यति दिशि दिशि रहसि भवन्तम्' इति पूर्ववाक्येनान्वयानुपपत्ते। **नेम इत्यर्धे इति** ॥ वर्तते इति शेष। प्रनेमस्मिन् ददृशे सोमो अन्त' इत्यृचि तथा दर्शनादिति भाव। **सम इति** ॥ सर्वशब्दसमानार्थक एव समशब्द सर्वादिगणे पठित इत्यर्थ। **तुल्यपर्यायस्त्विति** ॥ तुल्यशब्दसमानार्थक इत्यर्थ। **ज्ञापकादिति** ॥ अन्यथा तत्र समेषामिति निर्दिशेदिति भाव। ननु अष्टाध्यायीपठिते 'अन्तर बहिर्योगोपसव्यानयो' इति जसि सर्वनामसज्ञाविकल्पविधायके सूत्रे 'अपुरीतिवक्तव्यम्' इति वार्तिकपाठो भाष्ये दृश्यते। एवञ्चान्तरा पुर्य इत्यत्र जसि सर्वनामसज्ञानिषेधेऽपि, अन्तराया पुरीत्यत्र तन्निषेधाभावात् अन्तरस्यामिति स्यादित्यत आह। **गणसूत्र इति** ॥ यद्यपीद वार्तिक जसि विकल्पविधिप्रकरणे पठित, तथाप्यन्तर बहिरिति गणसूत्रस्यैवाय शेष। नत्वष्टाध्यायीपठितस्य अन्तर बहिरिति

## २१८ । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । (१-१-३४)

एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणपाठात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे—पूर्वाः । स्वाभिधेयापेक्षावधिनियमो व्यवस्था । 'व्यवस्थायां' किम् । दक्षिणा गाथकाः । कुशला इत्यर्थः । 'असंज्ञायां' किम् । उत्तराः कुरवः ।

## २१९ । स्वमज्ञातिधनाख्यायाम् । (१-१-३५)

---

जसि विधायकस्य शेषः । जसश्शी इत्यत्र अत इत्यनुवृत्त्या टावन्तात्तत्प्राप्तिविरहात् । ततश्च पुर्या विशेष्यभूताया अन्तरशब्दः सर्वादिगणे पाठं न लभते इत्येतद्वार्तिकार्थः पर्यवस्यति । एवञ्च जसोऽन्यत्रापि अन्तरशब्दस्य पुर्या विशेष्यभूताया सर्वनामत्वं नेति लभ्यते । अतः अन्तरायां पुरीत्यादौ सर्वनामकार्यं स्याडादि नभवतीत्यभिप्रेत्योदाहरति । **अन्तरायां पुरीति** ॥ यद्यप्यन्तरशब्द एव सर्वादिगणे पठितः, नतु टावन्तः । तथापि लिङ्गविशिष्टपरिभाषया वा एकादेशस्य पूर्वान्तत्वेन ग्रहणाद्वा सर्वनामत्वप्राप्तिर्बोध्या । सिमशब्दस्तु 'सिमः कृत्स्ने च शक्ते च स्यान्मर्यादावबद्धयोः' इति कोशे प्रसिद्धः । अथ सर्वादिगणान्तर्गतात्रिसूत्रीसमानाकारामष्टाध्यायीपठितां पूर्वपरेत्यादित्रिसूत्रीं पुनरुक्तिशङ्कां व्युदस्यन् व्याचष्टे । **पूर्वपर** ॥ सर्वनामानीति विभाषाजसीति चानुवर्तते । तदाह । **एतेषामिति** ॥ पूर्वादिसप्तानामित्यर्थः । **गण इति** ॥ सर्वादिगण इत्यर्थः । **या प्राप्तेति** ॥ सर्वादीनीत्यनेन नित्या सञ्ज्ञा या प्राप्तेत्यर्थः । अनेन पूर्वपरेति सूत्रं गणपठितं जसोऽन्यत्र नित्यतया सर्वनामसञ्ज्ञार्थम् । अष्टाध्यायीपठितन्तु जसि तद्विकल्पार्थमिति न पौनरुक्त्यमिति सूचितम् । **स्वाभिधेयेति** ॥ अपेक्ष्यत इत्यपेक्षः कर्मणि घञ् । स्वस्य पूर्वादिशब्दस्याभिधेयः वाच्यः तेन अपेक्षः अपेक्ष्यमाणः अवधेर्नियमः व्यवस्थाशब्देन विवक्षित इत्यर्थः । ततश्च नियमेनावधिसापेक्षार्थे वर्तमानानां पूर्वादिशब्दानां जसि सर्वनामसञ्ज्ञाविकल्प इति फलति । **व्यवस्थायां किमिति** ॥ पूर्वादिशब्दानां नियमेनावधिसापेक्ष एवार्थे विद्यमानत्वमिति प्रश्नः । **दक्षिणा गाथका इति** ॥ अत्र दक्षिणशब्दो नावध्यपेक्ष इति भावः । दक्षिणपार्श्ववर्तिनो गाथका इत्यत्र कस्मादित्यवध्यपेक्षा अस्त्येवेत्यत आह । **कुशला इत्यर्थ इति** ॥ यद्यपि प्रावीण्यमपि कस्मादित्यवध्यपेक्षमेव । तथापि उत्तरे प्रत्युत्तरे च शक्त इत्यादि प्रत्युदाहरणं बोध्यमित्याहुः । **असञ्ज्ञायां किमिति** ॥ 'सञ्ज्ञोपसर्जनीभूतास्तु न सर्वादयः' इति वक्ष्यमाणतया सञ्ज्ञायां सर्वनामत्वस्याप्रसक्तेरिति प्रश्नः । **उत्तराः कुरव इति** ॥ कुरुशब्दो देशविशेषे नित्यं बहुवचनान्तः । सुमेरुमवधीकृत्य तत्रोत्तरशब्दो वर्तत इत्यस्तीह व्यवस्था । किन्तु सञ्ज्ञाशब्दत्वान्नास्य सर्वनामता । पूर्वादिशब्दानान्तु दिक्कालेषु अनादिस्सङ्केत इति न ते सञ्ज्ञाशब्दाः । कुरुषु तूत्तरशब्दस्याधुनिकस्सङ्केत इति भवत्ययं सञ्ज्ञाशब्द इति मन्यते । केचित्त्वसञ्ज्ञायामित्यभावे सञ्ज्ञायामेव पूर्वादिशब्दानामप्राप्तविभाषा स्यादित्याहुः । **स्वमज्ञा-**

ज्ञातिधनान्यवाचिन स्वशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात् । स्वे—स्वा । आत्मीया इत्यर्थ । आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वा, ज्ञातयोऽर्था वा ।

## २२०। अन्तरं बहिर्योगोपसंव्यानयोः । (१-१-३६)

बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य या प्राप्ता सञ्ज्ञा सा जसि वा स्यात् । अन्तरे—अन्तरा वा गृहा । वाह्या इत्यर्थ । अन्तरे—अन्तरा वा शाटका । परिधानीया इत्यर्थ ।

## २२१ । पूर्वादिभ्यो नवभ्यो वा । (७-१-१६)

एभ्यो नवभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्त । पूर्वस्मात्—पूर्वात् । पूर्वस्मिन्—पूर्वे । एव परादीनामपि । शेषं सर्ववत् । एकशब्द सङ्ख्यायां नित्यैकवचनान्त ।

---

**तीति** ॥ अत्रापि सर्वनामानीति विभाषा जसीति चानुवर्तते । ज्ञातिश्च धनञ्च ज्ञातिधने तयो राख्या ज्ञातिधनाख्या न ज्ञातिधनाख्या अज्ञातिधनाख्या तस्या अज्ञातिधनाख्यायाम् । स्वमिति शब्दस्वरूपापेक्षया नपुसकत्वम् । तदाह । **ज्ञातिधनान्येति । स्वे—स्वाः, इति** ॥ सर्वनामत्वे शीभाव, 'तदभावे तदभ व इति भाव । आत्मा आत्मीय ज्ञाति धनञ्चेति स्वशब्दस्य चत्वारोऽर्था । (नि) 'स्वो ज्ञातावात्मनि स्व त्रिष्वात्मीये स्वोऽस्त्रिया धने' इत्यमर । अत्र स्वो ज्ञातावात्मनीत्येक वाक्यम् । ज्ञातावात्मनि च स्वशब्द पुल्लिङ्ग इत्यर्थ । स्व त्रिष्वात्मीये इति द्वितीय वाक्यम् । आत्मीये स्वशब्दो विशेष्यनिघ्न इत्यर्थ । स्वोऽस्त्रिया धन इति तृतीय वाक्यम् । धने स्वशब्द पुन्नपुसक इत्यर्थ । 'स्वस्स्यात् पुस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रिया धने' इति मेदिनीकोश । तत्र ज्ञातिधनयो पर्युदासात् आत्मनि आत्मीये च सर्वनामत्व जसि विकल्प्यत इत्यभिप्रेत्य व्याचष्टे । **आत्मीया इत्यर्थ इति । आत्मान इति वेति** ॥ ज्ञातिधनपर्युदासस्य प्रयोजनमाह । **ज्ञातिधनवाचिनस्त्विति** ॥ ज्ञातिवाचिन धनवाचिनश्च सर्वनामत्वपर्युदासात् जसि स्वा इत्येव रूपमित्यर्थ । नच ज्ञातिधनयोरप्यात्मीयत्वपुरस्कारे सर्वनामत्व न स्यादिति वाच्यम् । आख्याग्रहणबलेन ज्ञातित्वधनत्वपुरस्कार एव पर्युदासप्रवृत्ते । **अन्तरम्** ॥ अत्रापि सर्वनामानीति विभाषा जसीति चानुवर्तते । बहि अनावृतप्रदेश तेन योगस्सम्बन्ध यस्य स बहिर्योग बाहिर्विद्यमानोऽर्थ इति यावत् । उपसवीयते परिधीयत इति उपसव्यान अन्तरीय वस्त्र तदाह । **बाह्य इत्यादिना । पूर्वादिभ्यो** ॥ ङसिङ्योस्स्मात्स्मिनावित्यनुवर्तते । इत्याह । **एभ्य इति** ॥ पूर्वपरेत्यादित्रिसूत्रीनिर्दिष्टा पूर्वादय इह विवक्षिता । त्यदादयो हलन्ताधिकारे व्याख्यास्यन्ते । **एकशब्दस्संख्यायामिति** ॥ अर्थान्तरे तु द्विवचनबहुवचने अपि स्त । 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले

## २२२ । न बहुव्रीहौ । (१-१-२९)

बहुव्रीहौ चिकीर्षिते सर्वनामसज्ञा न स्यात्। त्वक पिता यस्य स त्वत्कपितृक । अहक पिता यस्य स. मत्कापितृक । इह समासात्प्रागेव प्रक्रियावाक्ये सर्वनामसंज्ञा निषिद्ध्यते। अन्यथा लौकिकविग्रहवाक्य इव तत्राप्यकच्प्रवर्तेत। स च समासेऽपि श्रूयेत । 'अतिक्रान्तो भवकन्तम्, अतिभवकान्'

---

तथा । साधारणे समानेऽल्पे सङ्ख्यायाञ्च प्रयुज्यते' इति कोश । स्यादेतत्। त्वत्कपितृक मत्कपितृक इति बहुव्रीहिं । त्वक पिता यस्य, अहक पिता यस्येति लौकिकविग्रहवाक्यम । लौकिकत्व प्रयोगार्हत्वम् । युष्मदस्मदोरज्ञाताद्यर्थे अव्ययसर्वनाम्नामित्यकचि युष्मकद् स , अस्मकद् स् इति स्थिते, 'ङे प्रथमयो' इत्यमि 'त्वाहौ सौ' इति त्वादेशे अहादेशे च सति 'शेषे लोप' इति लोपे, अतो गुणे, अमि पूर्वे च त्वकम् अहकम् इति रूपम्। युष्मद् स्, पितृ स्, अस्मद् स्, पितृ स्, इत्यलौकिक विग्रहवाक्यम्। प्रयोगानर्हत्वम् अलौकिकत्वम् इति स्थिति । तत्र त्वत्कपितृको मत्कपितृक इति बहुव्रीहिदशाया कप्रत्ययो न सम्भवति । युष्मदस्मदोस्सर्वनामत्वेनाकच्प्रसङ्गात्। **न बहुव्रीहौ** ॥ सर्वादीनि सर्वनामानीत्यनुवर्तते । बहुव्रीहौ सर्वादीनि सर्वनामानि न स्युरित्यर्थ प्रतीयते। एव सति सूत्रमिद व्यर्थम्। प्रियसर्वायेत्यादिना बहुव्रीहिवर्तिना सर्वादीना स्वार्थोपसङ्क्रान्तार्थान्तरप्रधानकतया उपसर्जनत्वादेव सर्वनामत्वनिषेधसिद्धे । 'सञ्ज्ञोपसर्जनीभूतास्तु न सर्वादय' इति वक्ष्यमाणत्वात्। अतो व्याचष्टे। **बहुव्रीहौ चिकीर्षित इति** ॥ बहुव्रीहाविति विषयसप्तम्याश्रयणात् अयमर्थो लभ्यते । तथाच बहुव्रीहौ प्रसक्ते सति तत प्रागेव विग्रहवाक्येऽय निषेधोऽर्थवान्। एकार्थीभावात्मकसामर्थ्यस्य समासदशायामेव सत्त्वेन विग्रहवाक्ये तदभावेन तदानीमुक्तोपसर्जनत्वस्याभावादिति भाव । अथ लौकिकविग्रहवाक्यन्दर्शयन् लक्ष्यभूत बहुव्रीहिं दर्शयति। **त्वकम्पितेत्यादिना** ॥ सर्वनामत्वाभावात् कप्रत्यये 'प्रत्ययोत्तरपदयोश्च' इति त्वमादेशे त्वत्क मत्क इति च रूपम । ननु बहुव्रीहिप्रवृत्ते प्राक् अलौकिकविग्रहवाक्ये सर्वनामत्वनिषेधात् त्वक पितेति कथ लौकिकविग्रहवाक्यप्रदर्शनमित्यत आह। **इहेति** ॥ न बहुव्रीहाविन्यस्मिन् सूत्र इत्यर्थ । **प्रक्रियावाक्य इति** ॥ युष्मद् स्, पितृ स्, अस्मद् स्, पितृ स्, इत्यलौकिकविग्रहवाक्य एवेत्यर्थ । लौकिकविग्रहवाक्ये तु नाय निषेध । बहुव्रीहिवत्तस्य स्वार्थे परिनिष्ठितत्वेन स्वतन्त्रप्रयोगार्हतया बहुव्रीहेस्तत्र चिकीर्षितत्वाभावात् अलौकिकविग्रहात्मके प्रक्रियावाक्य एव तस्य चिकीर्षितत्वात् । यथाचैतत्तथा समासनिरूपणे वक्ष्यते । ननु लौकिकविग्रहवाक्ये मास्तु सर्वनामतानिषेध । तत्राह । **अन्यथेति** ॥ न बहुव्रीहावित्यलौकिकविग्रहवाक्ये निषेधाभावे सतीत्यर्थ । **तत्रापीति** ॥ अलौकिकविग्रहवाक्येऽपीत्यर्थ । नन्वलौकिकविग्रहवाक्ये भवत्वकच् । सत्यप्यकचि तस्य प्रयोगानर्हत्वेन बाधकाभावादित्यत आह। **सचेति** ॥ अलौकिकविग्रहवाक्ये श्रुतस्य लौकिकविग्रहवाक्ये समासे च श्रवणनियमादिदि भाव । उभयत्रापि तन्नियमे दृष्टान्तद्वयमाह। **अतिक्रान्तो भवकन्तम्, अतिभवकानिति-**

इतिवत्। भाष्यकारस्तु 'त्वकत्पितृक.' 'मकत्पितृक' इति रूपे इष्टापत्तिं कृत्वैतत्सूत्र प्रत्याचख्यौ । अधिकदर्शित्वात्। यथोत्तर मुनीना प्रामाण्यम्। 'संज्ञोपस-

---

**वदिति** ॥ भवच्छब्दस्य सर्वादिगणे पाठात् सर्वनामत्वादलौकिकविग्रहदशायामकच् । ततश्च भवकत् अ अति इत्यलौकिकविग्रहवाक्य सम्पद्यते । तत्र "अत्यादय क्रान्ताद्यर्थे द्वितीयया" इति समासे सति "सुपो धातुप्रातिपदिकयो" इति सुब्लुकि अतिभवकच्छब्दात् प्रथमैकवचने अतिभवकानिति रूपम् । समासाभावपक्षे तु भवकन्तमतिक्रान्त इति लौकिकविग्रहवाक्य भवति । तत्र समासदशाया भवच्छब्दार्थस्य स्वोपक्रान्तार्थान्तरप्रधानतया उपसर्जनत्वेऽपि अलौकिकविग्रहदशाया भवच्छब्दस्यानुपसर्जनत्वात् सर्वनामत्वे सति प्रवृत्त॰ अकच् अतिक्रान्तो भवकन्तामिति लौकिकविग्रहवाक्ये अतिभवकानिति समासेऽप्यनुवर्तते । लौकिकविग्रहदशाया भवच्छब्दस्य उक्तरीत्या अनुपसर्जनत्वात् । समासे तस्योपसर्जनत्वेऽपि योनिभूतालौकिकविग्रहदशाया प्रवृत्तस्याकचो निवृत्त्यभावात् । नच भवत् अम् इत्यलौकिकविग्रहदशाया सतोऽप्यनुपसर्जनत्वस्य समासदशाया विनाश प्राप्स्यमानतया विनाशोन्मुखत्वात् अकृतव्यूहपरिभाषया अलौकिकविग्रहवाक्येऽपि सर्वनामत्वाभावात् अकज्दुर्लभः । ततश्च अतिक्रान्तो भवकन्तमिति लौकिकविग्रहवाक्ये अतिभवकानिति समासे च कथमकच्प्रसक्त इति दृष्टान्तासिद्धिरिति वाच्यम्। एवञ्जातीयकालौकिकविग्रहवाक्ये सर्वनामत्वप्रवृत्तौ अकृतव्यूहपरिभाषाया अनित्यत्वेन अप्रवृत्ते । तदनित्यत्वे च न बहुव्रीहाविति सूत्रमेव ज्ञापकम् । तथा हि—यद्यकृतव्यूहपरिभाषा सार्वत्रिकी स्यात्, तर्हि बहुव्रीहिविषयेऽपि युष्मद् स् पितृ स् इत्याद्यलौकिकविग्रहवाक्ये अनुपसर्जनत्वस्य बहुव्रीहिकालिकविनाशोन्मुखतया सर्वनामत्वस्याप्रसक्तत्वात् न बहुव्रीहाविति नारभ्येत । अकृतव्यूहपरिभाषायास्तत्राप्रवृत्ते । भविष्यद्बहुव्रीहिकालिकविनाशोन्मुखमनुपसर्जनत्व पुरस्कृत्य तदलौकिकविग्रहवाक्ये सर्वनामत्वस्याप्रसक्तत्वात् न निषेधाय न बहुव्रीहावित्यर्थवत् । नच उदाहृतबहुव्रीहिविषयालौकिकविग्रहवाक्ये अकृतव्यूहपरिभाषामाश्रित्यैव सर्वनामत्वाभाव आश्रीयताम् । किं न बहुव्रीहाविति सूत्रेणेति वाच्यम् । एव सत्यतिक्रान्तो भवकन्तमतिभवकन्तमातिभवकानित्यादि न सिध्येत् । अकृतव्यूहपरिभाषया तदलौकिकविग्रहवाक्येऽपि सर्वनामत्वाभावेनाकच प्रवृत्त्यभावे तस्यातिक्रान्तो भवकन्तमित्यादिलौकिकविग्रहवाक्ये अतिभवकानिति समासेऽपि श्रवण न स्यात् । एवञ्च बहुव्रीहिविषये अलौकिकविग्रहवाक्ये अकृतव्यूहपरिभाषाया अप्रवृत्तिं सिद्धवत्कृत्य सर्वनामत्वनिषेधात्तदितरसमासविषयेऽप्यलौकिकविग्रहवाक्ये अकृतव्यूहपरिभाषाया अप्रवृत्त्या सर्वनामत्व विज्ञायते । एतदर्थमेव न बहुव्रीहाविति सूत्रमित्यन्यत्र विस्तर । **प्रत्याचख्याविति** ॥ निराकृतवानित्यर्थ । सूत्रभाष्ययोरुभयोरपि स्मृतित्वाविशेषेऽपि उत्तरग्रन्थस्य प्रामाण्य पूर्वपूर्वस्याप्रामाण्यमिति भाव । **अधिकदर्शित्वादिति** ॥ वैयाकरणसमय इति भाव । न चाकृतव्यूहपरिभाषाया उक्तरीत्या अनित्यत्वज्ञापनार्थमेतत्सूत्रमिति वाच्यम् । अकृतव्यूहपरिभाषाया निर्मूलत्वस्य निष्फलत्वस्य च हलन्ताधिकारे सेदिवस्शब्दनिरूपणे 'समर्थाना प्रथमाद्वा' इत्यत्र च वक्ष्यमाणत्वात् । **यथोत्तरमिति** ॥ सूत्रकाराद्वार्तिककारस्य उभाभ्यामपि भाष्यकृत इत्येव मुनीनामुत्तरोत्तरस्य ।

र्जनीभूतास्तु न सर्वादय ' (वा २२५) महासंज्ञाकरणेन तदनुगुणानामेव गणे सन्निवेशात् । अत संज्ञाकार्यमन्तर्गणकार्यं च तेषा न भवति । सर्वो नाम कश्चित्तस्मै सर्वाय देहि । अतिक्रान्त सर्वमतिसर्वस्तस्मा अतिसर्वाय देहि । अतिकतरं कुलम् । अतितत् ।

## २२३ । तृतीयासमासे । (१-१-३०)

इह सर्वनामता न स्यात । मासपूर्वाय । तृतीयासमासार्थवाक्येऽपि न । मासेन पूर्वाय ।

## २२४ । द्वन्द्वे च । (१-१-३१)

द्वन्द्वे उक्तसंज्ञा न । वर्णाश्रमेतराणाम् । समुदायस्यैवाय निषेध ।

---

**संज्ञोपसर्जनीभूता इति** ॥ आधुनिकसङ्केतस्संज्ञा । अन्यविशेषणत्वेनोपस्थापकमुपसर्जनम् । **न सर्वादय इति** ॥ सर्वादिगणे पठिता न भवन्तीत्यर्थ । विकल्पमाशङ्क्याह । **महासंज्ञेति** ॥ टिघुभादिवदेकाक्षरसंज्ञामकृत्वा सर्वेषा नामानीत्यन्वर्थसंज्ञाकरणबलेन प्राधान्येनोपस्थितस्वीयमर्वार्थवाचकत्वस्य सर्वनामशब्दप्रवृत्तिनिमित्तत्वमित्यवगततया तथाविधानामेव सर्वादिगणे पाठानुमानादित्यर्थ । प्राधान्येनोपस्थितेत्यनेन उपसर्जनव्यावृत्ति । प्राधान्येनोपस्थितसर्वार्थवाचकत्वमित्युक्ते पूर्वादिशब्देष्वव्याप्ति । अतस्स्वीयेति सर्वार्थेत्यनेन संज्ञाशब्दव्यावृत्ति । संज्ञाशब्दानामेकैकव्यक्तिविषयकत्वात् । **संज्ञाकार्यमिति** ॥ सर्वनामसंज्ञाकार्यं शीस्मायादिकमित्यर्थ । **अन्तर्गणेति** ॥ सर्वादिगणे अन्तर्गतो गण अन्तर्गण तदीय कार्यम् 'अड्डतरादिभ्य ' 'त्यदादीनाम ' इत्यादिकमित्यर्थ । **सर्वाय देहीति** ॥ संज्ञाशब्दत्वात् स्मायादेशो न । **अतिकतरमिति** ॥ कतरमतिक्रान्त कुलम् अतिकतरमित्यत्र कतरशब्दस्य उपसर्जनत्वान्नाद्डादेश । **अतितदिति** ॥ तमतिक्रान्त कुलम्, अतितादित्यत्र, त्यदाद्यत्व 'तदोस्सस्सौ ' इति च न भवति । **तृतीया समासे** ॥ सर्वादीनीत्यतस्सर्वनामग्रहण, न बहुव्रीहाविव्यतो नेति चानुवर्तत इत्याभिप्रेत्याह । **इहेति । मासपूर्वायेति** ॥ मासेन पूर्व इति विग्रह । हेतौ तृतीया । पूर्वसदृशेति तृतीयातत्पुरुषसमास । मासात् पूर्वभावीत्यर्थ । 'विभाषा दिक्समासे बहुव्रीहौ '' इत्यत समासग्रहणे अनुवर्तमाने पुनस्समासग्रहण तृतीयासमासीयलौकिकविग्रहवाक्यरूपगौणसमासस्यापि परिग्रहार्थम् । ततश्च फलितमाह । **तृतीयासमासार्थेति । द्वन्द्वे च** ॥ सर्वादीनीत्यतस्सर्वनामग्रहण, न बहुव्रीहाविव्यतो नेति चानुवर्तते । तदाह—**द्वन्द्वे उक्तसंज्ञा नेति** ॥ सर्वनामसंज्ञा नेत्यर्थ । **वर्णाश्रमेतराणामिति** ॥ " वर्णाश्रमेतराणान्नो ब्रूहि धर्मानशेषत " इति याज्ञवल्क्यस्मृति । वर्णाश्च आश्रमाश्च इतरे चेति द्वन्द्व । अत्र सर्वनामत्वाभावादामि सर्वनाम्न इति न सुट् । **समुदायस्यैवेति** ॥ द्वन्द्वे विद्यमानानि यानि सर्वादीनि तानि सर्वनामानि न स्युरिति नार्थ । विद्यतिक्रियाध्याहारे गौरवात् । किन्तु द्वन्द्वे सर्वनामसंज्ञा

न त्ववयवानाम्। नचैवं तदन्तविधिना सुट्प्रसङ्ग। सर्वनाम्नो विहितस्याम सुडिति व्याख्यातत्वात्।

## २२५। विभाषा जसि। (१-१-३२)

जसाधार यत्कार्यं शीभावाख्य तत्र कर्तव्ये द्वन्द्वे उक्ता सज्ञा वा स्यात्। वर्णाश्रमेतरे—वर्णाश्रमेतरा। शीभाव प्रत्येव विभाषेत्युक्तम्। अतो नाकच्, किन्तु कप्रत्यय एव। वर्णाश्रमेतरका।

---

न भवतीति प्रधानभूतया निषेध्यभवनक्रिययैव द्वन्द्वस्याधारतयान्वय। द्वन्द्वाधारा सर्वनाम-सज्ञा न भवतीत्यक्षरार्थ। द्वन्द्वस्य सर्वनामसज्ञा नेति फलितम्। वर्णाश्रमेत्यादिसमुदायस्यैव द्वन्द्वता। नतु तदवयवानाम्। एवञ्च वर्णाश्रमेतरेत्यादिसमुदायस्यैव सर्वनामत्वनिषेध नतु तदवयवानामिति वस्तुस्थितिकथनम्। ननु द्वन्द्वावयवाना सर्वनामत्वनिषेधाभावे वर्णा-श्रमेतरशब्दे इतरशब्दस्य सर्वनामतया तत परस्यामस्सुटि वर्णाश्रमेतरेषामिति स्यात्। नच अवर्णान्तात् सर्वनाम्नोऽङ्गात् परस्यामस्सुड्विधानादिह चामि परे इतरशब्दस्य सर्वनामत्वेऽप्यङ्ग-त्वाभावान्न तत परस्यामस्सुट्प्रसक्तिरिति वाच्यम। सुड्विधिर्ह्ययमङ्गाधिकारस्थ। ततश्च 'पदाङ्गाधिकारे तस्य च तदन्तस्य च' इति परिभाषया सर्वनामान्ताददन्तादङ्गात् परस्यामस्सुड्वि-धीयते। ततश्च वर्णाश्रमेतरशब्दस्य समुदायस्य द्वन्द्वतया सर्वनामत्वनिषेधेऽपि तदवयवस्य इतरशब्दस्य सर्वनामतया तदन्ताङ्गात् परत्वादामस्सुट् स्यात्। नचैव सति द्वन्द्वस्य तन्निषेधो व्यर्थस्स्यादित्याशङ्क्यम्। पदाङ्गाधिकारादन्यत्र तसिल्त्रलादिविधौ तन्निषेधस्यार्थवत्त्वादित्य-शङ्क्य परिहरति। **नचैवमित्यादिना** ॥ एवमित्यनन्तर सतीति शेष। एव सति समुदाय-स्यैव निषेधे सति तदन्तविधिना सुट्प्रसङ्गो नेत्यन्वय। कुत इत्यत आह। **सर्वनाम्नो विहितस्येति** ॥ अवर्णान्तादङ्गात् परस्य सर्वनाम्नो विहितस्यामस्सुडिति व्याख्यानादि-त्यर्थ। प्रकृते च वर्णाश्रमेतरशब्दात् समुदायादाम्विहित। न तु समुदायस्सर्वनामसञ्ज्ञक। द्वन्द्व-स्य तन्निषेधात्। इतरशब्दस्तु सर्वनामसञ्ज्ञक. आमस्समुदायादेव विधानात्। अतो न सुडिति भाव। अवर्णान्तादङ्गात् सर्वनाम्नो विहितस्यामस्सुडिति व्याख्याने तु येषा तेषामित्यत्राव्याप्ति। अत अवर्णान्तादङ्गात् परस्य सर्वनाम्नो विहितस्यामस्सुडित्येव व्याख्येयम्। **विभाषा जसि** ॥ सर्वनामग्रहणमनुवर्तते, द्वन्द्व इति च। जसि इत्यविभक्तिको निर्देशः। जस इ जसि। आर्षस्सप्तम्या लुक्। इशब्दो इवर्णपरस्सन् शी इतीकारमाचष्टे। ततश्च जसादेश शीभावे कर्तव्ये इति फलितम्। तदाह। **जसाधारमिति** ॥ जस् आधारो यस्येति बहुव्रीहि। जस् स्थानिकमित्यर्थ। ननु जसि परतो द्वन्द्वे सर्वनामसज्ञा वा स्यादित्येव कुतो न व्या-ख्यायत इत्यत आह। **शीभाव प्रत्येवेत्यादिना** ॥ यदि तु अकच् स्यात्, तर्हि तस्या-प्यव्यवधायकत्वाच्छीभावविकल्प प्रसज्येत। कप्रत्यये तु सति तेन व्यवधानान्नोक्तदोष इत्याह। **वर्णाश्रमेतरका इति** ॥ नचाकचि कर्तव्ये विकल्पाभावेऽपि सर्वादीनीति नित्या सर्वनामसज्ञा कुतोऽत्र न स्यादिति वाच्यम्। 'द्वन्द्वे च' इति तस्या नित्यनिषेधात्। नच द्वन्द्वे

## ॥ अथ ओदन्तप्रकरणम् ॥

### २८४ । गोतो णित् । (७-१-९०)

गोशब्दात्पर सर्वनामस्थान णिद्वत्स्यात् । गौ । गावौ । गाव ।

### २८५ । औतोऽम्शसोः । (६-१-९३)

'आ ओत' इति च्छेद । ओकारादम्शसोरचि परे आकार एकादेश स्यात् । शसा साहचर्यात्सुबेव अम् गृह्यते । नेह । अचिनवम् । असुनवम् । गाम् । गावौ । गा । गवा । गवे । गो, इत्यादि । 'ओतो णिदिति वाच्यम्' (वा

अथ ओदन्ता निरूप्यन्ते । गो स् इति स्थिते । **गोतो णित्** ॥ गोत इति तपरकरणम् । 'इतोऽत् सर्वनामस्थाने' इत्यतस्सर्वनामस्थाने इत्यनुवृत्त प्रथमया विपरिणम्यते । तदाह । **गोशब्दादित्यादिना** ॥ **णिद्वत्स्यादिति** ॥ णिति परे यत कार्य तत्कार्यकारीत्यर्थ । **गौरिति** ॥ णिद्वत्त्वे 'अचो ञ्णिति' इति वृद्धि, औकार । रुत्वविसर्गाविति भाव । **गावौ । गावः, इति** ॥ णिद्वत्त्वे वृद्धि आवादेशश्चेति भाव । हे गौ । वृद्धौ एङ परत्वाभावात् न सम्बुद्धिलोप । अमि गो अम् इति स्थिते णिद्वत्त्वात् वृद्धो प्राप्तायाम् । **औतोऽम्शसोः ॥ छेदः इति** ॥ आ ओत इति च्छेद, व्याख्यानादिति भाव । ओत इति तपरकरणम् । ओकारादित्यर्थ । अम् च शस् च अम्शसौ, तयोरिति विग्रह । अवयवषष्ठ्यन्तमेतत् । 'इको यणचि' इत्यत अचीत्यनुवर्तते । 'एक पूर्वपरयो' इत्यधिकृतम् । तदाह । **ओकारादित्यादिना** ॥ शस् इह सुबेव गृह्यते । ननु 'बह्वल्पार्थात्' इति तद्धित शस् । अचीत्यनुवृत्ते । तद्धितस्य च शस अजादित्वासम्भवात् । 'लशक्वतद्धिते' इत्यत्र तद्धितपर्युदासात् । ननु 'चिञ् चयने' लङ्, अडागम, उत्तमपुरुषो मिप् । 'तस्थस्थमिपाम्' इति तस्य अमादेश । श्नुविकरण । 'सार्वधातुकार्धधातुकयो' इति गुण, ओकार । अचिनो अम् इति स्थिते अवादेशे अचिनवमिति रूपम् । तत्र अचिनो अम् इति स्थिते । अवादेश बाधित्वा 'औतोऽम्शसो' इत्यात्वे 'अचिनाम्' इति स्यादित्यत आह । **शसेति** ॥ **गामिति** ॥ परापि 'अचो ञ्णिति' इति वृद्धिरिह न भवति । आत्वस्य निरवकाशतया तदपवादत्वादिति भाष्यम् । नहि वृद्धिविषयादन्यत्र आत्वस्य प्रवृत्तिरस्तीति तदाशय । नच द्योशब्दादमि आत्व सावकाशम । 'गोतो णित्' इति णित्त्वस्य तत्राभावे वृद्धेरप्रसक्तेरिति वाच्यम् । अस्मादेव भाष्यात् 'ओतो णित्' इति णित्त्वस्य वक्ष्यमाणत्वेन तस्यापि वृद्धिविषयत्वादिति भाव । **गाः इति** ॥ असर्वनामस्थानत्वान्न णिद्वत्त्वम् । नापि वृद्धि । 'औतोऽ-

---

१ इद च (३६१९) वार्तिकव्याख्यायाम् 'ओता णित्' इतिसूत्र पाठतव्यम् इति कैयटेन सूत्रप्रतिनिधित्वेनोक्तम् 'अनवकाशमात्व वृद्धिं बाधिष्यते' इति भाष्ये ध्वनितम् ।

५०३५) । विहितविशेषण च । तेन । सुद्यौः । सुद्यावौ । सुद्यावः । सुद्या-मित्यादि । 'ओकारान्ताद्विहितं सर्वनामस्थानम्' इति व्याख्यानान्नेह । हे भानो । हे भानवः । उः शम्भुः स्मृतो येन सः स्मृतौः । स्मृतावौ । स्मृतावः । स्मृताम् । स्मृतावौ । स्मृताः इत्यादि ।

इत्योदन्ताः ।

---

म्शसो' इत्यात्वमिति भावः । टादावचि अवादेशं मत्वा आह । **गवा । गवे, इति ॥ गोरिति ॥** 'ङसिङसोश्च' इति पूर्वरूपमिति भावः । **इत्यादीति ॥** गवोः । गवाम् । गवि, इत्यादिशब्दार्थः । द्योशब्दः ओकारान्तस्त्रीलिङ्गः । "सुरलोको द्योदिवौ द्वे स्त्रियाम्" इत्यमरः । सु शोभना द्यौः यस्येति बहुव्रीहौ पुंलिङ्गः । सुद्योस् इत्यादिसर्वनामस्थाने 'गोतो णित्' इत्यप्राप्ते । **ओतो णिदिति वाच्यम् ॥** गोत इति गकारमपनीय 'ओतो णित्' इति वाच्यमित्यर्थः । तत्र प्रमाणमनुपदमेवोक्तम् । नन्विदं वार्तिकम् । तत्र ओत इति तपरकरणम् । ओकारात् सर्वनामस्थानं णिदिति लभ्यते । **विहितेति ॥** ओकाराद्विहितं सर्वनामस्थानमित्येवमोतः इत्येतद्विहितविशेषणमाश्रयणीयमित्यर्थः । **तेनेति ॥** गोत इति गकारमपनीय ओत इतिवचनेनेत्यर्थः । **सुद्यामित्यादीति ॥** गोशब्दवद्रूपाणीति भावः । **हे भानो इति ॥** ओकारात् परं सर्वनामस्थानं णिदिति व्याख्याने तु भानुशब्दात् सम्बुद्धौ 'ह्रस्वस्य गुणः' इति गुणे ओकारे सति सो ओकारात् परत्वात् णित्त्वे वृद्धौ औकारे एङः परत्वाभावात् सुलोपाभावे रुत्वविसर्गयोः हे भानौः इति स्यात् । अतो विहितविशेषणमित्यर्थः । ननु 'एङ्ह्रस्वात् सम्बुद्धेः' इत्यत्र एङ्ग्रहणसामर्थ्यादेव हे भानो, इत्यत्र णित्त्वं तत्प्रयुक्तवृद्धिश्च न भवति । अन्यथा 'एङ्ह्रस्वात्' इत्येव ब्रूयात् । अतो विहितविशेषणमित्यर्थस्यास्वारस्यादित्यत आह । **हे भानवः इति ॥** तत्र 'जसि च' इति गुणे भानो अस् इति स्थिते ओतः परत्वा णित्त्वे वृद्धौ आवादेशे भानावः इति स्यात् । अतो विहितविशेषणमिति भावः । वस्तुतस्तु लक्षणप्रतिपदोक्तपरिभाषया हे भानो, हे भानवः, इत्यत्र णित्त्वाभावोपपत्तेः विहितविशेषणत्वाश्रयणं व्यर्थमेव । **उः शम्भुरिति ॥** उः इत्यस्य विवरणं शम्भुरिति । उः स्मृतो येनेति विग्रहे बहुव्रीहिः । 'निष्ठा' इति स्मृतशब्दस्य पूर्वनिपातः । आद्गुणः । स्मृतो इति रूपम् । ततस्सुबुत्पत्तौ गोशब्दवद्रूपाणि । वस्तुतस्तु 'गोतो णित्' इति सूत्रशेषतया 'द्योश्च वृद्धिर्वक्तव्या' इत्येव वार्तिकं भाष्ये दृश्यते । 'औतोऽम्शसोः' इत्यत्र ओतो णिदिति तु न दृश्यते । अतोऽन्यदोकारान्तं प्रातिपदिकं नास्तीत्याहुः ॥

इत्योदन्ताः ।

---

## ॥ अथ ऐदन्तप्रकरणम् ॥

### २८६ । रायो हलि । (७-२-८५)

रैशब्दस्य आकारोऽन्तादेशः स्याद्धलि विभक्तौ । राः । अच्यायादेशः । रायौ । रायः । रायम् । रायौ । रायः । राया । राभ्यामित्यादि ।

इत्यैदन्ताः ।

## ॥ अथ औदन्तप्रकरणम् ॥

ग्लौः । ग्लावौ । ग्लावः । ग्लावम् । ग्लावौ । ग्लावः, इत्यादि । 'औतोऽम्शसोः' (सू २८५) इतीह न प्रवर्तते । 'ऐऔच्' (प सू ४) इति सूत्रेण ओदौतोः सावर्ण्याभावज्ञापनात् ।

इत्यौदन्ताः ।

**इत्यजन्तपुल्लिँङ्गप्रकरणम् ।**

---

अथैदन्ताः निरूप्यन्ते ॥ रैशब्दो धनवाची । "अर्थरैविभवा अपि" इत्यमरः । तस्य हलादिविभक्तिषु विशेषं दर्शयति । **रायो हलि** ॥ रायः इति रैशब्दस्य षष्ठ्यन्तम् । 'अष्टन आ विभक्तौ' इत्यत आ इति विभक्ताविति चानुवर्तते । हलीत्यनेन विभक्ताविति विशेष्यते । तदादिविधिः । तदाह । **रैशब्दस्येत्यादिना** ॥ हल्ग्रहणादचि आत्वं न, किन्तु आयादेश एवेत्यत आह । **अचीति** ॥ राः । आत्वे रुत्वविसर्गौ । अचि आयादेशमुदाहरति । **रायौ । रायः, इति** ॥ **इत्यादीति** ॥ राभिः । राये । राभ्याम् । राभ्यः । रायः । राभ्याम् । राभ्यः । रायः । रायोः । रायाम् । रायि । रायोः । रासु । रैशब्दश्छान्दस इति भाष्यम् । क्यजन्त एव छान्दस इति पक्षान्तरम् ॥

इत्यैदन्ताः ।

अथ औदन्ताः निरूप्यन्ते ॥ ग्लौशब्दश्चन्द्रवाची । "ग्लौर्मृगाङ्कः कलानिधिः" इत्यमरः । तस्य हलादौ न कश्चिद्विकारः । अचि तु आवादेश इति मत्वा आह । **ग्लौः । ग्लावौ । ग्लावः, इति** ॥ ग्लावम्–ग्लावौ–ग्लावः । ग्लावा–ग्लौभ्याम्–ग्लौभिः । ग्लावे–ग्लौभ्याम्–ग्लौभ्यः । ग्लावः–ग्लौभ्याम्–ग्लौभ्यः । ग्लावः–ग्लावोः–ग्लावाम् । ग्लावि । ग्लावोः । ग्लौषु । ननु 'औतोऽम्शसोः' इत्यत्र ओत्ग्रहणेन सावर्ण्यादौकारस्यापि ग्रहणात् अम्शसोर्ग्लौशब्दस्य आत्वं कुतो न स्यादित्यत आह । **औतोऽम्शसोरितीह नप्रवर्तते इति** ॥ ऐऔजित्यादिग्रन्थस्तु सञ्ज्ञाप्रकरणे व्याख्यातः । एवं जनानवतीति जनौः । क्विप् । ज्वरत्वरेत्यूठ् । एत्येधतीति वृद्धिः । जनावौ । जनावः इत्यादि ॥

इत्यौदन्ताः ।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां अजन्तपुल्लिँङ्गनिरूपणं समाप्तम् ।

---

। श्रीरस्तु ।

# ॥ अथ अजन्तस्त्रीलिङ्गे आदन्तप्रकरणम् ॥

रमा ।

## २८७ । औङ आपः । (७-१-१८)

आबन्तादङ्गात्परस्यौङ शी स्यात् । औङ् इत्यौकारविभक्तेः संज्ञा । रमे । रमाः ।

## २८८ । सम्बुद्धौ च । (७-३-१०६)

आप एकारः स्यात्सम्बुद्धौ । 'एङ्ह्रस्वात्—' (सू. १९३) इति सम्बुद्धिलोपः । हे रमे । हे रमे । हे रमाः । रमाम् । रमे । रमाः । स्त्रीत्वान्नत्वाभावः ।

---

अथ अजन्तस्त्रीलिङ्गा निरूप्यन्ते । **रमेति** ॥ रमते इति रमा । 'रमु क्रीडायाम्' पचाद्यचि 'अजाद्यतष्टाप्' । प्रत्ययान्तत्वादप्रातिपदिकत्वेऽपि 'ङ्याप् प्रातिपदिकात्' इति ङ्यापो पृथग्ग्रहणात्, लिङ्गविशिष्टपरिभाषया वा स्वादयः । 'हल्ङ्याप्' इति सुलोपः । अथ रमा औ इति स्थिते । **औङ आपः** ॥ आप इति पञ्चमी । प्रत्ययग्रहणपरिभाषया आबन्तं विवक्षितम् । अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते । औङ इति षष्ठी । 'जसश्शी' इत्यतश्शीत्यनुवर्तते । तदाह । **आबन्तादित्यादिना** ॥ औङ्शब्दस्याप्रसिद्धार्थत्वादाह । **औङितीति** ॥ **सञ्ज्ञेति** ॥ प्राचां शास्त्रे स्थितेति शेषः । **रमे इति** ॥ रमा औ इति स्थिते शीभावे तस्य स्थानिवत्त्वेन प्रत्ययत्वात् 'लशक्वतद्धिते' इति शस्येत्सञ्ज्ञायां लोपे 'आद्गुणः' इति एकारः । 'यस्येति च' इति लोपस्तु न । अभत्वात् । जसि सवर्णदीर्घम्मत्वा आह । **रमाः इति** ॥ पूर्वसवर्णदीर्घस्तु न भवति । 'दीर्घाज्जसि च' इति निषेधात् । हे रमा स् इति स्थिते । **सम्बुद्धौ च** ॥ 'बहुवचने झल्येत्' इत्यतः एदिति 'आङि चापः' इत्यतः आप इति चानुवर्तते । तदाह । **आपः इत्यादिना** ॥ आबन्तस्येत्यर्थः । 'अलोऽन्त्यस्य' । हे रमे स् इति स्थिते प्रक्रियां दर्शयति । **एङ् ह्रस्वादिति** ॥ हल्ङ्यादिलोपस्तु न । परत्वात् प्रतिपदोक्तत्वाच्च एत्त्वे कृते हल्ङ्यादिलोपस्याप्राप्तौ 'एङ् ह्रस्वात्' इति लोपस्यैव हि परत्वेन न्याय्यत्वादिति भावः । **रमामिति** ॥ 'अमि पूर्वः' इति पूर्वरूपम् । औङश्शीभावे आद्गुणं मत्वा आह । **रमे इति** ॥ **स्त्रीत्वादिति** ॥ शसि रमा अस् इति स्थिते